॥ श्रीः ॥

# श्रीगीतास्वामिविजयः ।
# नवभक्तिरसायनम् च ।

श्रीमत्परमहंसपरिव्राजकाचार्यवर्यपदवाक्यप्रमाणेत्यादि-
विरुदाङ्कित श्रीमज्जगद्गुरुशृङ्गेरीपीठाधीश्वर-
श्रीसच्चिदानन्दशिवाभिनव
नृसिंहभारतीस्वामिपादानां
अत्यन्तप्रियान्तेवासिना "श्रीमद्गीतास्वामि" पादपद्माराधकेन श्रीकाश्यपगोत्रदुग्धाब्धिकौस्तुभायमान-
श्रीरामभट्टात्मजेन श्रीकाशीनिवासिना
श्रीकृष्णशास्त्रिणा
प्रणीतं प्रकाशितंच ।

१९२३

20-4

# विषयाः ।

# शुद्धाशुद्धपत्रिका ।

## भूमिकायाम्

| पृ० | प० | अशु० | शु० |
|---|---|---|---|
| २ | १० | श्रिमद | श्रीमद |
| ३ | ८ | श्रकिाश्यां | श्रीकाश्यां |
| ६ | २० | विश्वश्वर | विश्वेश्वर |

## श्रीगीतास्वामिविजये

| पृ० | प० | अशु० | शु० |
|---|---|---|---|
| ५ | १ | कृष्णेनाव | कृष्णेनावर |
| ७ | ५ | शुभवासरे | शुभवत्सरे |
| ७ | १८ | कशी | काशी |
| १० | १७ | अन्तस्फू | अन्तःस्फू |
| १२ | ९ | तुं | तु |
| १९ | २ | सौरे | सूरिः |
| १९ | ११ | विषयः | विषयाः |
| १९ | १६ | ब्रह्मीभाव | ब्रह्मीभाव |

॥ श्रीः ॥

## ॥ श्रीसद्गुरुचरणसमर्पणम् ॥

यत्कारुण्यलवाश्रयेण परमं भाग्यं मयाऽऽसादितं
श्रीशृङ्गेरिजगद्गुरोरधिगता सा ब्रह्मविद्याप्यभूत् ।
भक्त्या भक्तिरसायनं नवमिदं मुद्राप्य पूर्वं स्वयं
गीतास्वामिजयश्च तच्चरणयोः कृत्वा कृतार्थोऽस्म्यहम् ॥ १ ॥

यत्पादाम्बुजसंश्रयेण महतां सेवां समासेदिवान्
क्षेत्रालिङ्गितपुण्यतीर्थसरितां यात्राश्च संप्राप्तवान् ॥
कृष्णस्तस्य गुरोर्बहिश्चर इव प्राणः पदाम्भोजयो-
राद्ये वर्षमहोत्सवेऽद्य कुरुते प्रीत्यै नवोपायनम् ॥ २ ॥

बार्हस्पत्ययुवाब्दकार्तिकमहामासे तृतीयातिथौ
पक्षे कृष्णमये शनैश्चरदिने संमुद्य भक्त्या मया ।
पूर्वोपार्जितपुण्यपुञ्जबलतः काश्यां गुरोरुत्सवे
ब्रह्मीभूततदीयपादयुगले चैतत्प्रणम्यार्पितम् ॥ ३ ॥

अस्मिन् वर्षमहोत्सवेऽखिलबुधानन्दावहे सांप्रतं
स्वीकुर्वन्त्वदमुपायनं नवरसं भक्त्या प्रणम्यार्पितम् ।
गीतास्वामियतीश्वरो गुरुवरो विश्वेश्वरैक्यं गतः
क्षिप्रं नः कुरुतां प्रसादमतुलस्वाराज्यसौख्यप्रदम् ॥ ४ ॥

इति शम्

# भूमिका ।

इदमिदानीं किञ्चिदिव प्रस्तूयते श्रीप्रज्ञानानन्दसरस्वती-विजयापरनामधेयं श्रीगीतास्वामिविजयं प्रति ।

इमे च स्वामिपादाः विन्ध्यस्य दक्षिणे ईश्वरनामनि संवत्सरे परशुरामक्षेत्रान्तर्गते कूडलूराख्ये महद्भिरतिशिष्टैरवनिसुराग्रेसरैरध्युषिते महति कस्मिंश्चिदग्रहारे, गायत्र्याख्यतरङ्गिणीतरङ्गपरिप्लाविते, लक्ष्मीदेव्यां श्रीरामभट्टाख्यविप्रवरात् स्वीयं पुण्यतमं जन्मालभन्त । भ्रातृभिस्सप्तभिस्सोदरीभ्यां द्वाभ्याञ्च साकं समभूज्जन्म एतेषाम्। नाम च तदाभूदेतेषां वेङ्कटराम इति। वयस्यतिबालेऽपि अवधीरितवाचस्पतिमतिविभवा इमे बालक्रीडादिषु सर्वेष्वपि कार्येषु तदानींतनेषु सर्वानप्यात्मीयानतिशेरते स्म वयस्यान् । यथाकालमुपनीताश्च तस्मिन्नेव वयसि आस्तिकतायां, तपोनिष्ठतायां, भगवद्भक्तौ, गायत्र्याराधने, महत्सेवायाञ्च न केवलमावहन्ननितरसाधारणीं नैपुणीम्; किन्तु तदानीमेवातिमहता वैराग्यवैभवेनापि विभूषिता आसन् इतीदमजनयदमन्दमानन्दमवलोकयताम् ॥

एवं भगवदाराधनादौ स्वीयं कालं यापयतामेतेषां, यद्यपि समजनि सुरभारत्या भगवत्याः पठनस्य समारम्भः स्वीये विंशे एव वयसि, तथापि अत्यल्पेनैव समयेन सा भगवती गैर्वाणी वाणी सुपरिचितेव प्राक्तनजन्मनि, सादरं सुदृढमालिङ्गतिस्मैनान् । एवं प्रायशस्सर्वेष्वपि तीर्थेषु समासाद्य स-

मुचितं पाण्डित्यं स्वीये पञ्चविंशे वयसि, स्वसदृशैर्लब्धवि-
द्यावैशद्यैस्स्वसमनन्तरजन्मभिः श्रीकृष्णशास्त्रिभिस्साकं प्र-
स्थाय स्वीयात् गृहात्, अवाप्य कमलालयचिदम्बरादिकं पु-
ण्यं क्षेत्रं, उपसङ्गम्य च महतस्तत्रत्यानाचार्यपादानाध्यात्मिक-
विद्यापारदृश्वनः, परिचर्य तच्चरणनळिनं, परिगृह्य च तैर-
तितुष्टैस्सानुग्रहमुपदिष्टामाध्यात्मिकीं विद्यां शान्तिपाठपुर-
स्सरं, ततः प्रतिनिवृत्य शृङ्गगिरिमवापुरद्वैतसिद्धिब्रह्मान-
न्दीयाद्यध्ययनार्थम् ॥

तत्र च श्रीमन्तः पूज्यपादाः श्रीमज्जगद्गुरुश्रीशारदापी-
ठाधिपतयः श्रिमदभिनवनृसिंहभारतीस्वामिनः बहोरेव का-
लात्पूर्वमध्यापनतः विरता अपि 'नेतः परमध्यापयामी'ति गृही-
तनियमा अपि, एतेषामतिविस्मापनीं प्रतिभाशक्तिमवेक्ष्य, वि-
नयनम्रताञ्च,स्वीयमप्युल्लङ्घ्य नियममिमानध्यापयन्नत्यादरेण।
मुक्त्वा शयनाहारसमयमनवरतमाचार्याणामन्ते वसद्भिरे-
भिर्न केवलमाध्यात्मिकी विद्याऽधिगता, प्रायशस्तदीया गुणा
अप्यभ्यस्ताः सर्वोत्तमाः ।

एवं ब्राह्मेण तेजसा स्वतस्सिद्धेन,गायत्रीजपाराधनादिना
च परिपुष्टेन, ब्रह्मचर्येण च महता, विद्यया चाध्यात्मिकयाऽत्यु-
त्तमया, सर्वोत्कृष्टया च वैराग्यसम्पदा विराजमाना इमे तृणी-
कृत्य तुच्छं वैषयिकं सुखाभासं, अवधीर्य च गार्हस्थ्यमखिल-
दुःखास्पदं, काञ्चित्कालं नैष्ठिकब्रह्मचर्येण, ततः प्रव्रज्यया चा-
त्मनो जीवनकालशेषं निनीषवः स्वीये द्वात्रिंशे वयसि प्रास्थि-

षतोत्तरदेशं प्रति तीर्थयात्रार्थं साकं भ्रातृभ्याम्। प्रस्थाय चैवं,अटित्वा सर्वानपि तीर्थविशेषान् क्षेत्रविशेषांश्च, परिज्ञायैतत्पाण्डित्यं परिचरितुमागतेभ्यः प्रार्थितवद्भ्यश्च तत्रत्येभ्यो जनेभ्यः वितीर्य महान्तमुपदेशमध्यात्मविषयकं, क्रमशो भगवतो भवानीपते राजधानीमासेदुरत्रभवतीं वाराणसीम् ॥

आसाद्य च तां, उषित्वा च तत्र कञ्चित्कालं,तत्तादृशेऽपि नैष्ठिके ब्रह्मचर्ये चिरकालमात्मनोऽवस्थितिमनुचितां मन्वाना इमे तत्रैव श्रकिाश्यां तारकमठस्थं सुप्रसिद्धानां स्वयंप्रकाशानन्दसरस्वतीस्वामिपादानां अत्यन्तप्रियशिष्यभूतं अद्वैतानन्दसरस्वतीनामधेयं कञ्चन गुरुवरमुपगम्य ततः पारिव्राज्यसाम्राज्यमगृह्णन्नात्मनश्चत्वारिंशे वयसि। एवं पारमहंस्यं भावमावहन्तः प्रज्ञानानन्दसरस्वत्याख्यया विभूषिता इमे आत्मारामा अप्यज्ञजनानुजिघृक्षया परं, अतः प्रस्थाय दक्षिणदेशं प्रति, मधुरानवसालपुर्या (पुदुक्कोट्टै) दिषु तत्रत्यजनप्रार्थनापरतन्त्राः अतिगम्भीरेण, प्रतिविषयमुदाहरणपरिपूरितेन, सरळसरळेन अज्ञानपि विज्ञान् कुर्वता, अश्मनोऽपि विद्रावयता,अनाविलेन, श्रीगीतामृतपरीवाहेण परिप्लावयन्तोऽनुदिनमन्तःकरणानि श्रवणार्थमागतानां परस्सहस्राणां जनानां,कञ्चित्कालमवसंस्तत्रैव। "अद्यैव फलितं चिरात्संवर्धितेनास्माकं मनोरथतरुणा, अद्यैव सुपक्वमस्मद्भागधेयेन, अद्यैव सञ्जाता सफलताऽस्माकं चक्षुश्श्रवसोः; चिरञ्जीवन्त्विमे स्वामिपादाः;सुचिरमत्रैव तिष्ठन्तु; पावयन्त्वस्मान् दृष्टिपातेन; प्लावयन्तु चानन्दामृतधारया

गीतोपदेशजनितया" इति श्रोतृजनमुखोत्थिताः वाचस्सर्वतः प्रसृतास्तदानीम् । केचिच्च स्वामिपादानां पूर्वपरिचिताः "अहो ! किमिदं (वेङ्कट) रामोऽपीदानीं कृष्णस्सञ्जातो गीतोपदेशे, आः ! विस्मृतमस्माभिः, पूर्वमेव परित्यक्तमनेन रामत्वम्, अतस्समुचितमेव कृष्णीभवनं" इति परस्परमालपन्ति स्म । एवं श्रवणपुटैर्गीतारसमापिबन्तोऽमन्दानन्दभरिताः जनाः एनान् गीतास्वामिन इति समुचितेन नाम्ना व्यवहर्तुमारभन्त । ततः प्रभृति तदेव नाम प्रथितमभूदेतेषाम् ॥

न्युष्य च कियन्तञ्चन कालं दक्षिणदेशे, वाराणसीमेव परममावासस्थानमात्मनो मन्यमानाः, प्रतिनिवृत्य दक्षिणतः, प्राप्य वाराणसीं परमपावन्या भगवत्या भागीरथीलहर्या परिप्लावितलां, तत्रापि गीतोपन्यासादिना सन्तमसमान्तरमपनयन्तस्तत्रत्यानां यदा अवसंस्तदा मधुरावासिभिः श्रीनटेशार्यैः स्वपितुराश्रमान्तरजिघृक्षोरुपदेशार्थं सादरं सानुनयं प्रार्थिता इमे पुनस्तत्र गत्वा यथावदनुगृह्य तान्, तैः "अत्रैव स्थित्वा काञ्चित्कालमनुग्राह्या वयं" इति पुनः पुनः प्रार्थ्यमाना अपि तदुपरि अतितरां न्यस्तप्रेमतया अनुल्लङ्घनीयमपि तदीयं वचः उल्लङ्घ्यैव, अविगणय्यैव तदीयां मानसीं व्यथां स्ववियोगप्रयुक्तां, उपदिष्टा इव गुरूणां गुरुणा भगवता परमेश्वरेण स्वीयं शरीरपातमासन्नकालिकं, बलादाकृष्टा इव प्रतिमुच्य स्वयंवरमालां भगवत्या मुक्तिलक्ष्म्या, ततः प्रतिनिवृत्य, प्राप्य च वाराणसीं द्वित्रान् मासानवसन् । ततः, "न ह वै सशरीरस्य

सतः प्रियाप्रिययोरपहतिरस्ति। अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशत" इति श्रुतिवाक्यमनवरतमनुसन्दधानास्स्वयमेव शरीरबन्धपरिजिहीर्षया वा तन्मुखादवधीरितसुधारसं गीतामृतरसं पायं पायं तृप्तिमनासेदुषां, पुनरप्यनवरतं पिपासूनामतिकठिनेन दौर्भाग्यविलसितेन वा, विन्ध्यस्योत्तरदेशानुसारेण भावनामनि दक्षिणानुसारेण च दुन्दुभिनामनि वत्सरे तुलाकृष्णतृतीयायां रात्रावष्टवादनसमये भौतिकमिदं शरीरं भूतग्रामश्च परित्यज्य नित्ये निरतिशये आनन्दैकरसे स्वप्रकाशे प्रज्ञानघने प्रज्ञानानन्दसरस्वत्य इमे सरस्वतीव नादेयमम्भः एकतामवापुः । ततः अवाप्तकामानां तेषां कृते न किञ्चिदवशिष्यते यद्यपि कर्त्तव्यं, तथापि स्वकर्त्तव्यमनुरुध्य तत्पूर्वाश्रमसोदरैः श्रीकृष्णशास्त्रिभिः परमहंसमुद्दिश्य यत्कर्त्तव्यं तदखिलं यथावदाब्दमनुष्ठाय सांवत्सरिके तदीये आराधने, सोदरभूतानां पूर्वस्मिन्नाश्रमे, परमहंसाश्रमे च परमाचार्यभूतानां तेषां निरतिशयकृपाभिलाषिभिः, श्रीगीतस्वामिविजयो नामायं ग्रन्थः स्वेन विरचितः समर्पितश्च प्रथमं तच्चरणनलिनयोस्तदीयभक्तेभ्यः सुहृद्भ्यश्च समर्प्यते सादरम् ।

तस्मिन्नेव चावसरे नवभक्तिरसायनं नाम ग्रन्थोऽप्यन्यः स्वनिर्मितः भक्तिभरनम्रेण मनसा तच्चरणकमलयोः समर्पितः तत्स्मरणार्थं वितीर्यते लोकेभ्यः । यद्यपि श्रीमधुसूदनसरस्वतीभिरेकं "भक्तिरसायनं" विरचितं तथापि नेदानीं समग्रं तदुपलभ्यते । उपलभ्यमानेऽपि तस्मिन् अद्यतना

अन्तर्निगूढं रसभरमास्वादयितुमसमर्थाः सर्वोपकारकेऽपि तस्मिन् आत्मानुपकारकतामापादयन्ति । आधुनिका हि पुरुषाः अनधिगतश्रुतिस्मृतिपुराणाः जीविकार्थं भाषान्तरमभ्यस्यन्तः केनापि जन्मान्तरीयेण पुण्यपरीपाकेनास्मच्छास्त्रोक्तानां भक्त्यादीनामपि स्वरूपमधिजिगमिषवोऽपि अतिकठिनमपि दुरवगाहमपि विषयजातमतिसरळया शैल्या नातिकठिनया च गिरा प्रतिविषयमुदाहरणपरिपूरितया प्रतिपादितमभिलषन्ति । स्निह्यन्ति च तादृश एव ग्रन्थे नितरामिति निपुणतरं पर्यालोचयद्भिः श्रीकृष्णशास्त्रिवर्यैः आविद्वज्जनमागोपालाङ्गनं यथा महदुपकृता भवेयुर्लोकाः तथा प्रयतमानैः अस्मिन्नवभक्तिरसायने भक्तेस्स्वरूपं, तस्याः प्रकारः, तस्या नवविधत्वं, एकैकस्या अपि स्वरूपं, तस्यास्सुलभसाध्यता, तस्याश्चावश्यसम्पादनीयता, तदभावे च कथञ्चिदपि पुरुषस्य श्रेयःप्राप्त्यभावः इत्यादिकं सोदाहरणमतिगम्भीरैस्सरळैर्हृदयङ्गमैः पद्यैः कथं निरूपितं इत्यत्र ग्रन्थावेक्षकास्स्वयमेवात्मनः प्रमाणीभवेयुरिति नात्र बहु वक्तव्यम् । अतश्चानेन नवभक्तिरसायनेनातिमधुरेण तीव्रतरमनादिसिद्धमात्मनो भवरोगमुच्छिद्य, चिरादन्विष्यमाणं नित्यं निरतिशयमात्मीयमानन्दमवाप्य नित्यतृप्ता जना भवेयुरित्याशास्महे भगवन्तं भवानीपतिं श्रीविश्वेश्वरमिति सर्वं शिवम् ॥

| | |
|---|---|
| आश्विनकृष्णैकादशी<br>संवत् १९८० वि०<br>६-१०-१९२३ ई०<br>वाराणसी | वेदविशारदः—चिन्नस्वामिशास्त्री<br>श्रीकाशीहिन्दूविश्वविद्यालये मीमांसाध्यापक |

* श्रीः *

# श्रीगीतास्वामिविजयः ॥

प्रणम्य श्रीगुरुं भक्त्या दक्षिणामूर्तिरूपिणम् ।
श्रीगीतास्वामिविजयो मया संगृह्य कीर्त्यते ॥ १ ॥

क्व गीतास्वामिचरितमवाङ्मनसगोचरम् ।
क्व च बालमतिस्सोऽहं करोमि बहुसाहसम् ॥ २ ॥

अथवा स्वामिपादानामपारगुणगौरवम् ।
बालं वाचालयति मां करुणा च महात्मनाम् ॥ ३ ॥

श्रीमत्काश्यपगोत्रदुग्धजलधेः श्रीरामलक्ष्मीसुत-
व्याजात्प्रादुरभूत्पुराऽमृतकलापूर्णेन्दुवद्भूतले ।
रामो नाम समस्तसद्गुणनिधिः श्रीवेङ्कटाद्यस्स्वयं
यस्तस्मै गुरुमूर्तये नम इदं प्रज्ञानपूर्णात्मने ॥ ४ ॥

श्रीमत्संगमनामभूसुरमहाग्रामे समृद्धे सदा
संपद्भिस्सकलार्तवीभिरभितः कात्यायनीमन्दिरे ।
गायत्रीगिरिजानदीप्रवरयोः पुण्ये महासङ्गमे
यश्च प्रादुरभूद्वाग्दिशि नमस्तस्मै परस्मै मम ॥ ५ ॥

ऐश्वर्यं स्वस्य लोके प्रथयितुमिव योऽवातरच्चेश्वराब्दे
लग्नं कुंभं गतेऽर्के कविशनिसहिते मेषसंस्थे कुजेऽपि ।
चन्द्रे स्वस्थानकेतौ मकरगुरुबुधाश्लिष्टराहौ प्रभाते
यस्साक्षात्प्रादुरासीत् भवतु नम इदं सच्चिदानन्दभूम्ने ॥६॥

प्रथिते भृगुरामपालिते भगवच्छङ्करपादपाविते ।
बहुवर्षसमृद्धसज्जने प्रियभोगाढ्यलसत्पयोवने[३] ॥ ७ ॥
अवधूतपुरे[३] पुराऽऽर्जिते वटमूलालयदेवशोभिते ।
अवसन् निजवंशपूर्वजाः सुखमस्मै गुरवे नमो नमः ॥ ८ ॥

पुत्रेषु सत्स्वपि बहुष्वभिरूपरूपे
रामे न तृप्तिमगमन्नयनानि पित्रोः ।
ज्योतिःषु सत्स्वपि बहुष्वभितो जनानां
राकासुधाकररुचाविव शारदायाम् ॥ ९ ॥

---

१ कूटल्लूर २ पालक्काड ३ कुन्नूर

रूपे मारश्शूरभावे कुमारस्सारे शक्रो धीरतायां गिरीन्द्रः ।
ज्ञाने शंभुस्सद्गुणे रामचन्द्रश्चासीद्बुद्धौ यो गुरुस्तं नमामि ॥१०॥

बाल्ये पित्रोपनीतस्तदनु विरहितस्तेन दुर्दैवयोगा-
द्विद्याभ्यासं चकार स्वमतिकुशलतातोषिताचार्यसंघः ।
वैराग्यात्षोडशाब्दे विषयभवसुखे तत्त्वचिन्तापरोऽभूत्
यस्तस्मै भूयसां स्यान्निकरणनमसां मामिका मालिकेयम्॥११॥

यः श्रीकृष्णमुपाससाद वरदं भक्त्या भृशं पार्थव-
द्गायत्रीमपि मातरं सुरनदीग्रामे[1]ऽतिबाल्ये पुरा ।
पश्चाद्व्याघ्रपुरे[2]श्वरं खरमहाभाग्यं सिषेवे चिरं
तस्मै सद्गुरुमूर्तये नम इदं प्रज्ञानपूर्णात्मने ॥ १२ ॥

श्रीरामस्येव तृप्तिं दशरथनृपतिर्नागमद्दर्शनेन
शास्त्री सांबाभिधेयः क्षणमपि विरहं नैव सेहे च यस्य ।
साहित्यन्यायशास्त्रान्तरसुखविहृतां वीक्ष्य मेधामनन्द-
त्तस्मै प्रव्राजकानामपि कुलगुरवे हन्त भूयो नमोऽस्तु॥१३॥

---

१ अम्पलपुळे

२ वैक्कम्

कौमारे रघुनाथवत्परवशस्तीर्थादियात्रेच्छया
कृष्णेनानुजसोदरेण सह यः श्रीरामनाथं[1] ययौ ।
तस्माद्रामकथासुधां श्रुतिपुटद्वन्द्वेन गत्वा पिबन्
श्रीकृष्णाब्धिसमुद्गतामभजत श्रीत्यागराजं[2] चिरम् ॥१४॥

पश्चादभ्रसभापतिं[3] तरळयन्भक्त्यात्मविद्यागुरुं
श्रीमच्छाङ्करसूत्रभाष्यमपठत्कृष्णेन पूर्णं सह ।
सार्धं वर्षमहो चिदंबरमहाक्षेत्रे वसन्यः पुरा
तस्मै सद्गुरुमूर्तये नम इदं प्रज्ञानपूर्णात्मने ॥ १५ ॥

श्रीमच्चंपककाननान्तवसतिश्रीत्यागराजाध्वरि-[4]
श्रेष्ठाप्ताखिलशास्त्रसारहृदयं शान्तस्वभावं गुरुम् ।
वेदान्ताशयबुद्धये हरिहरं शुश्रूषयाऽतोषय-
द्यस्तस्मै गुरुमूर्तये नम इदं प्रज्ञानपूर्णात्मने ॥ १६ ॥

श्रीरामायणगानकर्मणि जगद्विख्यातसत्ख्यातिमान्
वाल्मीकेरपरावतारसदृशः श्रीकृष्णशास्त्री महान् ।
यस्मिन्नात्मजबुद्धिमेव निदधावत्युत्तमैस्सद्गुणै-
स्तस्मै सद्गुरुमूर्तये नम इदं प्रज्ञानपूर्णात्मने ॥ १७ ॥

---

१ रामेश्वरम्. २ कमलालयस्थम्.
३ चिदंबरम्. ४ मन्नारकुटि

कृष्णेनावरजन्मनाप्युपगतश्शृंगेरिपीठोत्तमं
ब्रह्मानन्दसुधाब्धिमग्नहृदयश्चाचार्यचूडामणिम् ।
अध्यैष्टाप्यखिलागमान्तभगवत्पादीयभाष्याणि य-
स्तस्मै सद्गुरुमूर्तये नम इदं प्रज्ञानपूर्णात्मने ॥ १८ ॥

वेदान्तारण्यसिंहास्सततमभिनवश्रीनृसिंहार्यपादा
श्शृङ्गेरीपीठदेवास्सनकमुनिमुखस्तुल्यविज्ञानपूर्णाः ॥
व्यासाचार्याश्शुकर्षिप्रवरमिव जगद्देशिका यं ह्यपश्यन्
प्रज्ञानानन्दनाम्ने भवतु नम इदं देशिकेन्द्राय तस्मै ॥१९॥

नेत्रीभूतौ गुरूणामखिलभरवहावङ्घ्रियुग्मे तदीये
भक्तौ श्रीकण्ठकृष्णौ निगमरसविदौ नीतिशास्त्रप्रवीणौ ।
मेधाविद्याविलासैरनितरसुलभैर्येन विस्मापितौ तौ
प्रज्ञानानन्दनाम्ने भवतु नम इदं देशिकेन्द्राय तस्मै ॥२०॥

ख्यातौ जैमिनिबादरायणसमौ मीमांसयोर्हि द्वयोः
सुब्रह्मण्यसमाह्वयश्च सुधियौ श्रीवैद्यनाथाभिधः ।
यस्य द्वावपि सद्गुणैर्बहुमतिं सर्वोत्तरैश्चक्रतुः
तस्मै सद्गुरुमूर्तये नम इदं प्रज्ञानपूर्णात्मने ॥ २१ ॥

तीरे ताम्रापगाया दुरितततिहरे पापनाशाभिधाने
शृङ्गेरीपीठराजेश्वरजगदखिलाचार्यसत्सन्निधाने ।
तीर्थे क्षेत्रप्रधाने घटजमुनिकृतोमेशकल्याणवेषे
द्रष्टुं भक्त्याऽऽगतायास्सुतगुरुजगदाचार्यपादान् समोदम् ॥२२॥

अन्त्ये काले जनन्या श्रुतिपुटमधुरैरात्मविद्योपदेशै-
रानन्दं वर्धयन् यः परशिवकृपया लोकसंपूजितायाः ।
कालं कञ्चिन्निनाय प्रियसहजवरैस्सोदरीभ्यां च साकं
प्रज्ञानानन्दनाम्ने भवतु नम इदं सच्चिदानन्दधाम्ने ॥२३॥

पुण्ये क्षेत्रे पुराचैः परिणतसुकृतैः पापनाशाभिधाने
देहान्मोक्षं गतां तां तदनु परपदं नीतवान्मुक्तगम्यम् ।
अन्त्यं कृत्यं च कृत्वा सह सहजवरैः शंकराचार्यवद्यः
प्रज्ञानानन्दभूम्ने भवतु नम इदं सच्चिदानन्दधाम्ने॥२४॥

आसेतोराहिमाद्रेरमृतमयमहासारवाचां प्रवाहै-
र्यात्रा कृष्णेन साकं त्रिविधजनमनस्तापमुन्मूलयन् सन् ।
लोकानानन्दयद्यः शरणमुपगतांस्तीर्थयात्रापदेशा-
त्सुब्रह्मण्यानुजेनाप्यनुगतचरणो हन्त तस्मै नमोऽस्तु २५॥

---

१ ताम्रवर्णी

आबाल्यादभिकांक्षितां भगवतीं काशीमुपागम्य यो
भ्रातृभ्यां सह विश्वनाथमभजत्कालं सुखं कञ्चन्।
चत्वारिंशति वत्सरे परिणतैः पुण्यैः पुरा संचितै-
स्तस्मै सद्गुरुमूर्तये नियमिनां नाथाय नित्यं नमः ॥२६॥

शुक्लाख्ये शुभवासरे गुरुमते ज्येष्ठे च मासेऽसिते
पक्षे पर्वणि सौरमानविधया मासे वृषे पिङ्गळे।
वैराग्येण परेण यश्च परमं हंसाश्रमं प्राविश-
त्पूर्णानन्दवने नमो भगवते तस्मै यतीन्द्राय मे ॥ २७ ॥

मग्नांस्तारयितुं चिरान्नरवरान् संसारसिन्धोस्स्वतो-
ऽद्वैतानन्दसरस्वतीगुरुकृतं सन्यासधर्मं गतः।
काश्यामेवमुवास तारकमठे पाठं यतीनां वदन्
वेदान्तार्थविदां य एव गुरवे पूर्णाय तस्मै नमः॥ २८ ॥

सेतोर्यात्रापदेशात्पुनरपि भगवत्पूज्यपादावतारा-
त्पुण्यां पूर्णातटस्थां प्रथितगुरुवरप्राप्तमूर्तिप्रतिष्ठाम्।
प्रापद्यः कालटीं तां पथि किल भगवत्पादजन्मोत्सवार्थं
काशीतस्सामिशङ्कं[1] भवतु नम इदं देशिकेन्द्राय तस्मै॥२९॥

---

१ श्रीकशी

भाग्यं प्राप्तं समस्तं परमशिव मया त्वत्प्रसादादिदानी-
मित्थं व्याघ्रालयेशो कथयितुमिव तं प्राप्य भूयोऽर्चयन्यः ।
चातुर्मास्याय तस्मादगमदपि नवं सालमार्याग्रहारं
साधूनां श्रोत्रियाणां भवतु नम इदं देशिकेन्द्राय तस्मै॥ ३०॥

वर्षैर्गीतामृतानां त्रिविधमपि परीतापमुन्मूलयन् सन्
सर्वानानन्दयंस्तान्परमपदपरब्रह्मसंबोधनेन ।
द्वौ मासौ तत्र नीत्वा सकलजननुतस्त्रैशिरः[२]पत्तनं यः
प्रापत्कृष्णेन साकं भवतु नम इदं देशिकेन्द्राय तस्मै॥ ३१॥

श्रीरङ्गे रङ्गनाथं तदनु गिरिवरे मातृभूतेश्वरं तं
जंबूनाथं च मार्गेऽभजदलमखिलाण्डेश्वरीमंबिकां यः ।
मीनाक्षीराजधानीं पुरमथ मधुरामागमद्दर्शनीयां
प्रज्ञानानन्दनाम्ने भवतु नम इदं देशिकेन्द्राय तस्मै ॥३२॥

गीता गीतास्समस्ता अपि हि भगवतो वासुदेवस्य येन
श्रीमद्वालाँ[३]स्यपुर्यां सकलसुकृतिनां तत्त्वविज्ञानहेतोः ।
तस्मै वश्याय साक्षात्परगुरुवपुषे श्रीनटेशार्यभक्तेः
प्रज्ञानानन्दनाम्ने भवतु नम इदं सच्चिदानन्दभूम्ने ॥३३॥

---

१ पुदुकोट्टै  २ त्रिचिनाप्पल्लि  ३ दक्षिणमधुरा

श्रीगीतामृतवर्षणेन सकलं सन्तापमुन्मूल्य य-
स्स्वानन्दांबुधिमग्नमग्नहृदयानाबालगोपालकम् ।
युद्धादिश्रममन्तरेण मधुरालोकान्विधायाखिलान्
गीतास्वामिपदं जगाम गुरवे पूर्णाय तस्मै नमः ॥ ३४ ॥

हालास्यात्पुनरागमद्रघुपतेस्सेतुं ततः प्रार्थितो
भक्त्या जन्मपदं षंडर्धनयनग्रामं नटेशस्य यः ।
मासं तत्र विधाय वासमवसत्काशीं समागम्य तां
वेदान्तार्थपरश्च तारकमठे तस्मै परस्मै नमः ॥ ३५ ॥

ब्रह्मानन्दप्रणीतां हृदयबहुतमश्चान्द्रिकां चन्द्रिकां यः
टीकामद्वैतसिद्धेर्गुरुमुखपठितामादिशत्स्वागतानाम् ।
सिद्धान्तज्ञानहेतोश्शमदमकरुणादैवसंपत्तिभाजां
प्रज्ञानानन्दनाम्ने भवतु नम इदं देशिकेन्द्राय तस्मै ॥३६॥

आस्वाद्याद्भुतवाक्सुधारसझरीमानन्दसंदायिनी-
मायापाशशतेन बद्धहृदयास्संप्रार्थ्य यं सद्गुरुम् ।
घट्टे हन्त हनूमतश्शुकमठे स्वावासयन्भूसुरा-
स्तस्मै सद्गुरुमूर्तये यतिकुलश्रेष्ठाय भूयो नमः ॥ ३७ ॥

---

१ आरुपाति

सन्तापं शमयन् य एव करुणापूर्णैः कटाक्षामृतैः
　　क्षुत्तृष्णे क्षपयन्सुधारसमुचां वाचां विलासैस्सताम् ।
संसाराभिधबन्धमात्मगमहाविद्यासिना छेदयन्
　　कालं कञ्चन नीतवाञ्छुकमठे तस्मै परस्मै नमः ॥ ३८ ॥

पित्रे सन्न्यासदीक्षावितरणकथया श्रीनटेशार्यमुख्यै-
　　र्भक्त्या यः प्रार्थितस्सन्पुनरपि मधुरामागमद्राजधानीम् ।
मीनाक्ष्यास्सुन्दरेशप्रचुरतरमहाभाग्यलक्ष्म्याः प्रमोदात्
　　प्रज्ञानानन्दनाम्ने भवतु नम इदं सच्चिदानन्दधाम्ने ॥३९॥

भक्त्या श्रीदण्डपाण्यध्वरिवरसुहृदा तत्र सम्प्रार्थितस्सन्
　　विद्यामान्येन तेनाप्रविशदनुगतोऽद्वैतविद्यासभां यः ।
ब्रह्मानन्दानुभूतेः प्रथयितुमखिलं प्राभवं पण्डितानां
　　प्रज्ञानानन्दनाम्ने भवतु नम इदं सच्चिदानन्दभूम्ने ॥४०॥

अन्तस्स्फूर्जदमेयबोधपरमानन्दप्रवाहोपमै-
　　र्गङ्गातुङ्गतरङ्गसङ्गरजयासङ्गप्रसङ्गोदयैः ।
यश्चाप्लावयदास्यपद्मविगलद्वेदान्तवाक्यामृतै-
　　र्विस्माप्याखिलपण्डितान्सदसि नस्तस्मै परस्मै नमः ॥४१॥

देवानां ब्रह्मगीतामुपनिषदुदितब्रह्मगीतातिपूतां
देवानां ब्रह्मगीताम्भुवि निजमधुरावासिभक्तोत्तमानाम् ।
गायन्त्यः श्रीजयन्तीमहमपि भगवत्पूज्यपादस्य पूज्यं
शिष्यैस्साकं व्यतानीद्भवतु नम इदं देशिकेन्द्राय तस्मै॥४२॥

बन्धून्सप्त सहोदरानुपगतान्पूर्वाश्रमे स्वागमं
श्रुत्वा भक्तिबहुप्रहर्षभरितान्नारायणादींस्ततः ।
आश्वासप्रियसारसूनृतगिराप्यानन्दयद्यस्तथा
सोदर्यौ स्वपदारविन्दशरणे तस्मै परस्मै नमः ॥ ४३ ॥

सामोदं श्लाघयन् यस्सकलमतिमतामग्रतस्सज्जनानां
कृष्णं निर्व्याजभक्तं निजपदकमले प्राणतुल्यं व्यजानात् ।
गाम्भीर्यापारधैर्योपरतिमतिदयासद्गुणावासभूमिः
श्रीगीतास्वामिनाम्ने भवतु नम इदं देशिकेन्द्राय तस्मै॥४४॥

नत्वा श्रीसुन्दरेशं प्रतिदिनमखिलानन्ददानस्वतन्त्रां
मीनाक्षीं मातरं तां परवशहृदयां भक्तिभारेण कुर्वन् ।
लोकानानन्दयद्यस्त्वमृतमयकलावाग्विलासैस्समस्तान्
प्रज्ञानानन्दनाम्ने भवतु नम इदं देशिकेन्द्राय तस्मै ॥ ४५ ॥

आपृच्छयानेकवारं सकरुणनयनालोकनैस्तत्पर्यन्त्यां
मीनाक्ष्यामम्बिकायां दिश मम सततं काशिकावासमेवम्।
वेगादागात्स्वकाशीं क्षणमपि विरहे भीतभीतो गताब्दे
श्रीमान्यो नो यतीन्द्रो भवतु नम इदं देशिकान्द्राय तस्मै॥४६॥

यस्याकर्ण्य वचोझरीमपि वियत्कल्लोलिनीस्पर्धिनीं
श्रीकाञ्चीपुरकामकोटिगुरुराट् सम्भावयामास च।
यः काशीशुकदेवनामकमठालङ्कारभावं ययौ
तस्मै सद्गुरुमूर्त्तये नम इदं प्रज्ञानपूर्णात्मने॥ ४७॥

यः श्रीरामकथामृतंतु सततं पीत्वा न तृप्तिं गतः
श्रीमद्भाष्यसुधासमुद्रलहरीडोलासु खेलन्नपि।
गङ्गानन्दवनेश्वरादिभजनानन्दैकदीक्षागुरु-
स्तस्मै सद्गुरुमूर्तये यतिपतिश्रेष्ठाय भूयो नमः॥ ४८॥

नित्यं केदारतीर्थे रुचिरसुरसरिद्वारिपूरेऽभिषेकं
कृत्वा यश्चाह्निकं श्रीवटतरुवसतेस्सन्निधाने गुरोर्यः।
मन्त्रानावर्त्तयंस्तं करतलवशगं कारयामास भक्त्या
प्रज्ञानानन्दनाम्ने भवतु नम इदं देशिकेन्द्राय तस्मै॥ ४९॥

यात्रां नित्याश्च नित्यं नियमयमयुतस्तीव्रवैराग्यपूर्वं
कुर्वन्विश्वेश्वरं द्राक्करगतबदरं यस्सदारश्चकार ।
भक्त्या वेदान्तविद्यापरिणतिपरयाऽनन्यया काशिकायां
श्रीगीतास्वामिनाम्ने भवतु नम इदं देशिकेन्द्राय तस्मै ॥५०॥

जायापुत्रधनैषणात्रयजयेनालोक्य सर्वात्मता—
मायासेन विनैव सच्चिदमितानन्दात्मभावं गतः ।
मायामानुषवेषतश्शुकमठालङ्कारभावं ययौ
यस्तस्मै गुरुमूर्तये नम इदं प्रज्ञानपूर्णात्मने ॥ ५१ ॥

संसारामिततापतप्तजनतामादेशकुम्भस्रव-
त्स्वानन्दामृतनिर्झरैस्सुखयितुं यः प्राप्तदीक्षस्स्वयम् ।
ब्रह्मानन्दघनात्मना शुकमठालङ्कारभावं ययौ
तस्मै सद्गुरुमूर्त्तये नम इदं प्रज्ञानपूर्णात्मने ॥ ५२ ॥

जीवन्मुक्तगुणातिगस्थितमहाप्रज्ञादिलिङ्गैर्दया-
ऽऽलोकादेशवचोभिरन्तरमितानन्दामृताडम्बरैः ।
आचण्डालमभेदभावमधुरैरानन्दयद्यस्सदा
तस्मै सद्गुरुमूर्त्तये नम इदं प्रज्ञानपूर्णात्मने ॥ ५३ ॥

एवं काशीनिवासादनुपमपरमानन्दपीयूषसिन्धौ
मग्नो मग्नो न यस्तत्तृणमपि गणयामास सायुज्यसौख्यम्।
भोगे प्रारब्धतन्त्रे विकृतिविरहितस्साक्षिभावेन तिष्ठन्
प्रज्ञानानन्दनाम्ने भवतु नम इदं देशिकेन्द्राय तस्मै ॥५४॥

काशीवाससुखं सुखेन जुषतो यस्याप्यतीते चतु-
श्चत्वारिंशति वत्सरे किल महाप्रारब्धदोषोत्थितः।
पूर्वं कश्चन सन्निपातविषमः प्राप्तश्शरीरे ज्वरः
तस्मै सद्गुरुमूर्त्तये नम इदं प्रज्ञानपूर्णात्मने ॥ ५५ ॥

कर्णारुन्तुदवृत्तमेतदखिलं श्रुत्वैव यस्य द्रुतं-
काशीतटशिवरामकृष्णसहजात्कृष्णोऽतिदुःखार्दितः।
सुब्रह्मण्यसहोदरेण सहितः काशीं समागम्य त-
द्भैषज्यं भिषजां वरैर्व्यरचयत्तस्मै परस्मै नमः ॥ ५६ ॥

कैङ्कर्याय धनं तृणञ्च गणयन्कृष्णोऽपि यस्याकरो-
दायुर्वेदविशारदैर्बहुविधां भक्त्या चिकित्सां जवात्।
शिष्यैर्भक्तजनैस्सहैव सहजैर्नक्तंदिवं श्रद्धया
तस्मै सद्गुरुमूर्त्तये नम इदं प्रज्ञानपूर्णात्मने ॥ ५७ ॥

एवं पक्षचिकित्सया प्रतिदिनं शान्तोऽपि घोरज्वरः
प्रारब्धेन बलाधिकोऽयमिति यो विज्ञाय तत्त्वं निजम् ।
आहूयाद्वयभक्तमात्मचरणद्वन्द्वे तु कृष्णं मुदा
तच्चाज्ञापयदेवमेव यमिनान्नाथाय तस्मै नमः ॥ ५८ ॥

विवेकचूडामणिमेव नित्यं श्रोतुं मनो मे जुषते प्रमोदम् ।
अतस्त्वमेतं पठ सन्निधाने कृष्णेति यः प्राह नमोऽस्तु तस्मै ॥५९॥

आज्ञां यदीयां शिरसा वहन्सन्विवेकचूडामणिमेव सोऽपि ।
आनन्दमुत्पादयति स्म नित्यं यस्यान्तिके वै मधुरं पठन्सन् ॥६०॥

शृण्वञ्छ्रुतिभ्यां तमतीव मोदात्समादधौ चित्तमपास्तखेदम् ।
आनन्दपूर्णात्मनि सत्यबोधे यस्सर्वदा तस्य नमो नमोऽस्तु ॥६१॥

ज्ञात्वा देहविसर्गकालमथ तान्कृष्णादिभक्तान्वद-
न्नाहूयाहमिदं शरीरमधुना त्यक्त्वाऽऽत्मविद्या हुतम् ।
ब्रह्मीभावमुपैमि सत्यमिति यो विश्वेश्वरैक्यं ययौ
तस्मै सद्गुरुमूर्त्तये नम इदं प्रज्ञानपूर्णात्मने ॥ ६२ ॥

सौरे दुन्दुभिवत्सरे दिनकरे पादावशेषां तुलां
प्राप्ते कृष्णतृतीयमङ्गलनिशापूर्वार्धयामे गते ।
भावाब्दे परमं पदं गुरुमते मासे च यः कार्त्तिके
प्राप्तोऽभूद्गुरुमूर्त्तये भगवते तस्मै परस्मै नमः ॥ ६३ ॥

प्राप्ते काश्यां यतीन्द्रे परममिहपदं प्राणतुल्ये हि यस्मि-
न्प्राणानुद्धन्तुकामान्परिणतिविषमं कर्म्म मे निर्बबन्ध ।
एवं कृष्णोऽन्वशोचन्नियमनविदलद्दुःखवेगप्रसङ्गे
श्रीगीतास्वामिनाम्ने भवतु नम इदं देशिकेन्द्राय तस्मै ६४॥

ब्रह्मीभूते च यस्मिन्व्यथितमतितरां मानसं जातमासी-
त्कृष्णादीनां जनानामुपनिषदुदितब्रह्मबोधे स्थितेऽपि ।
कृच्छ्राल्लब्ध्वाऽऽत्मधैर्य्यं तदनु रचयितुं यस्य गङ्गासमाधिं
कृष्णस्सज्जो बभूव द्विजवरसहजैस्साकमस्मै नमोस्तु ६५॥

पूजां ब्राह्मणवेदघोषमधुरां भेरीमृदङ्गोल्लस-
त्तालालिङ्गितवाद्यगीतसहितं भक्त्यैव यस्याचरन् ।
गत्वा श्रीमणिकर्णिकां भगवतीं तस्यां समाधिं व्यधात्
कृष्णो भक्तजनैस्सहेह गुरवे तस्मै परस्मै नमः ॥ ६६ ॥

सालग्रामेऽपि गङ्गापयसि दशदिनं पूजयन्सद्गुरुं यं
　　सत्पात्रं पायसान्नं धरणिमखभुजे पात्रभूताय दत्त्वा ।
पूर्णामाराधनान्तामकुरुत महतीं यस्य पूजामनेकैः
　　कृष्णस्साकं द्विजेन्द्रैर्भवतु नम इदं देशिकेन्द्राय तस्मै॥६७॥

भक्तैर्वेङ्कोबरावाभिधवरमधुराश्रीनटेशार्यमुख्यै-
　　स्सिद्धैस्सम्प्रेषितार्थैश्श्रुतिपदरसिकान्ब्राह्मणान् यत्स्वरूपान्
भक्ष्यैर्भोज्यैर्विचित्रैरमृतरसभरैर्दक्षिणावस्त्रपूर्वैः
　　कृष्णोऽप्याराधयत्स्वैर्भवतु नम इदं देशिकेन्द्राय तस्मै ॥६८॥

भुक्त्वाऽऽकण्ठं समोदं परवशहृदया धन्यवादान्वदन्तः
　　कीर्त्तिं विस्तारयन्तस्सदसि यतिपतेर्यस्य चित्रां महान्तः।
आशीर्वादानकार्षुर्द्विजवरतिलकास्साक्षतान्वेदमन्त्रैः
　　कृष्णादीनां जनानां भवतु नम इदं देशिकेन्द्राय तस्मै॥६९॥

श्रीकाश्यां प्रतिमासमेवमवनीदेवेन्द्रपूजामुखा-
　　त्कृष्णाराधितपादुकस्य महतां पूज्यस्य यस्याधुना ।
पूर्णोऽभूत्प्रथमाब्दिकोऽखिलवुधानन्दो महानुत्सव-
　　स्तस्मै सद्गुरुमूर्तये नम इदं भूयोऽपि भूयो नमः ॥७०॥

धन्यं धन्यं कुलं नः पदयुगरजसा पावितं यद्गुरूणां
प्रज्ञानानन्दनाम्नामधिगतयशसामष्टदिङ्मण्डलेऽपि ।
धन्यौ धन्यौ तदीयाविह किल पितरौ धन्यधन्यास्तदीयाः
धन्या धन्या वयश्च प्रियमधुरकथालापसेवादिभाजः ॥७१॥

प्रज्ञानानन्दनामा परमहितमयं सच्चिदानन्दभूमा
काशीविश्वेशधामा वितरतु सततं कल्पवृक्षादिसीमा ।
देवाचार्याभधीमानपि नतसुधियां प्रार्थितान्सर्वकामान्
श्रीमान्योगीन्द्रमौलिर्जयतु च भगवान्नम्रभूपालमौलिः ॥७२॥

यः श्रीवञ्चिमहीतलेन्द्रतिलकश्रीमूलराजोदित-
स्यानन्दूरपुरस्थसंस्कृतकलाश्रीपाठशालोदरे ।
विद्याजन्म समेत्य पूर्वमधुना श्रेयः परं प्राप्तवान्
कृष्णस्तस्य कृतिष्वयं हि विजयःपूर्णोऽभवत्स्वामिनाम् ॥७३॥

श्रीगीतास्वामिविजयः पूर्णः कृष्णेन निर्मितः ।
प्रसादयतु चेतांसि गुरूणां च महात्मनाम् ॥

इति श्रीकृष्णशास्त्रिकृतिषु श्रीगीतास्वामिविजयस्संपूर्णः ॥

॥ स्वस्त्यस्तु ॥ शान्तिरस्तु ॥

* श्रीः *

# श्रीगीतास्वामिपादानां विदेह मुक्तिसमये ग्रन्थकारैः कृताः श्लोकाः ।

प्रज्ञानानन्दहंसप्रवरकुलमणिर्भावसंवत्सरेऽस्मिन्
सौरे सूर्ये तुलास्थे क्षितिसुतदिवसे पूर्वयामे निशायाम् ।
प्राणश्रोत्रेन्द्रियान्तःकरणगणयुतं स्थूलदेहं विहाय
ब्रह्मीभावं हि काश्यामगमदवितथानन्दमात्मस्वरूपम् ॥ १ ॥

ब्रह्मीभावं गतेऽस्मिन् यतिवरवृषभे भूमिदेवैस्सुधीभि-
स्साकं सर्वेऽपि देवाः परवशमनसस्स्वाश्रुबिन्दूनमुञ्चन् ।
ईषद्वर्षच्छलेन स्वशुचमिव भृशं व्यञ्जयन्तस्तदानीं
सूर्योऽप्यन्तर्हितोऽभूद्व्यथित इव महादुर्दिनश्रीं प्रकाश्य ॥२॥

सरस्वत्याश्शान्ताः प्रियतरविलासा बहुविधाः
प्रहर्षा गीताया अपि भगवतश्शान्तिमभजन् ।
श्रियो विद्यायाश्च प्रलयमगमन्नात्मविषयः ।
गते ब्रह्मीभावं गुरुयतिवरे पूर्णसुगुणे ॥ ३ ॥

वैराग्यस्य शिरोऽपतत्क्षितितले भक्तेश्च भाग्यं गतं
शान्त्यादेश्च समाश्रयो लयमगाच्छान्तश्च बुद्धेर्महः ।
सौशील्यस्य जयो व्ययं समगमद्भ्रष्टो दयाया मदो
ब्रह्मीभावमुपागते गुरुवरे ह्यस्मिन् महापूरुषे ॥ ४ ॥

गाम्भीर्यस्य पराजयोऽभवदहो धैर्यस्य धैर्यं गतं
सौन्दर्यस्य च मानहानिरभवद्वीर्यस्य लुप्तं बलम् ।
औदार्यस्य यशो विनष्टमभवच्छ्रीविश्वनाथं गते
काश्यां तारकवैभवेन परमे हंसे गुरौ सांप्रतम् ॥ ५ ॥

॥ श्रीः ॥

श्रीकाशीहिन्दू विश्वविद्यालय मीमांसाध्यापक

श्री।चिन्नस्वामिशास्त्रिकृताः

# श्रीगीतास्वामिपादविदेहमुक्तिश्लोकाः ।

प्रज्ञानानन्दयोगीन्द्रो यतिराजोऽविमुक्तके ।
संत्यज्य भौतिकं देहमात्मारामो विराजते ॥ १ ॥

अयमद्य विधूय बन्धनं चिरकालानुसृतं भवाभिधम् ।
निजभावमवाप्य भासते नितरां योगिवरो गतस्पृहः ॥ २ ॥

जनता परमत्रवञ्चिता हरतैनं विधिना दुरात्मना ।
प्रतिपाद्य पुरा वचोनिधिं मधुराभाषिणमेनमंजसा ॥

नियतिर्गलिता जनस्य वा किमसूयापरवान् विधिर्भवेत् ।
अथवा यतिराट् स्वयं जहौ निजदेहं विरतोऽद्य भौतिकम् ॥४॥

क्वासौ पण्डितमण्डलीनिजमनो विस्मापनी चातुरी
मोचासारभृतां सुधारसमुचां वाचां श्रयेत् कं जनम् ।
येयं रागिषु चञ्चलामतितरामर्थैकतानां स्थितिं
पश्यन्त्यात्मरतिं विधूतरजसं कर्मन्दिनं संश्रिता ॥ ५ ॥

हंसीभूय द्विजातिर्निजनिलयमसौ सत्वरं प्राप्तुकामो
हित्वा पङ्काभिभूतं जलनिलयमिमं सारसाधिष्ठितं च ।
अच्छाच्छं नित्यशुद्धं निरवधिविभवं राजहंसोपसेव्यं
प्राप्य द्राक् मानसं तच्चिरमभिलषितं राजते निष्कलङ्कः ॥ ६॥

* श्रीः *

# भूमिका ॥

अयि भोः आनन्दैकरसिका आस्तिकावतंसा आर्यमहाशयाः !

यत्कारुण्यकणाज्जातं नवभक्तिरसायनम् ।
तयोर्मम गुरोः पादपद्मयोरिदमर्पये ॥

इदं हि नवभक्तिरसायनं अस्मदास्तिकमतावलम्बिनामाङ्गलेयभाषाभ्यासवशादविदितश्रुतिस्मृतिगौरवाणामतएव अतिगम्भीरानप्यागमार्थान् भक्तियोगादीन् धर्मान् उपपत्तिमुखेन अनायासं अवगन्तुकामानां अधिकारिणामप्युपकाराय मया प्रणीतम् ।

यद्यपि पुराणादिभ्य एव अवगन्तुं शक्यं तत्र तत्र प्रतिपाद्यमानं भक्तियोगप्रभावादिकं, तथाप्येकीकृत्य तन्निरूपणे स्यात् सौकर्यं श्रीमहाभारतभागवतादिदर्शनालसानामपि तज्जिज्ञासूनामिति प्रणीतं भक्तिरसायनं परमकारुणिकैः श्रीमधुसूदनसरस्वतीस्वामिपादैः । तच्च दौर्भाग्यादस्माकं नाद्यापि पूर्णमुपलभ्यते । तस्मात् सामान्यरूपेण भक्तियोगजिज्ञासूनां उपकारकमेवेदं स्यादिति सम्भाव्यते ॥

यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ ।
तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः ॥

इति श्रुतिमूलके अस्मिंश्च नवभक्तिरसायने—

श्रवणं कीर्तनं विष्णोः स्मरणं पादसेवनम् ।
अर्चनं वन्दनं दास्यं सख्यमात्मनिवेदनम् ॥

इति श्रीभागवतोक्तनवविधभक्तिविवरणरूपे भगवद्भक्ति-माहात्म्य-स्वरूप-साधन-नवविधविशेषफलादिकं—

संक्षेपविस्तारमुखेन सम्यक् प्रस्तूयमानः प्रकृतः पदार्थः ।
सूक्ष्मोऽपि पुंसां श्रवणोत्सुकानां सुखं समारोहति चित्तवृत्तिम् ॥

इत्युक्तरीत्या सरळैरेव पद्यैस्सदृष्टान्तं यथामति निरूपितमस्ति । दृष्टान्तमुखेन प्रतिपाद्यमाने हि वस्तुनि प्रतिपत्तिरनायासेनोत्पद्यते प्रतिपत्तॄणां ।

यद्यप्यपौरुषेयतया स्वतः प्रमाणभूता भगवती श्रुतिः स्मृतिर्वा तदनुगृहीता नापेक्षत एव दृष्टान्तादिकं भक्तियोगादिरूपे स्वविषये, नास्ति चायुर्वेदैकवेद्यायामिव चिकित्सायां अतिगम्भीरे अस्मिन् विषयेऽवकाशश्शुष्कतर्काणां, युक्तं च श्रुत्यैकगम्येऽस्मिन् धर्मे तासामेव प्रामाण्यं चक्षुरादीनामिव रूपादिविषये, तथापि प्रतिपत्तिसौकर्याय परमकारुणिकतया लोकबुद्धिमनुसरन्तीभिः श्रुतिभिः स्मृतिभिश्चाद्रियन्त एव तत्सम्मतास्तर्काः, एवं चाधुनिकानामास्तिकशिरोमणीनां अधिकारिणां अनायासावबोधाय आचार्यवर्यैर्यथासम्भवमुपयुज्यमानाश्श्रुत्यनुकूला युक्तयस्सर्वश्रुत्यनुकूलाः प्राचीनशैलीमपि नातिवर्तन्त इत्यत्र नास्ति संदेहलेशोऽप्यस्मत्संप्रदायतत्त्ववेदिनामाचार्यचूडामणीनाम् । अत एवोक्तं भगवत्पू-

ज्यपादैः-"श्रुतिमतस्तर्कोऽनुसन्धीयतां" इति ॥

एवमद्वैतभावशुद्धं अपारसारबद्धं अशेषसाधुबुद्धं अबाध-सिद्धान्तसिद्धं अनेकदृष्टान्तयुक्तं एतद्रसायनं महतां करुणार-सपूरपूरितैः कटाक्षपातैः परिपूतं सत् यदि पूरयेद्भक्तियोगा-भिलाषिणां मनोरथान् पूर्णएव भवेत्तदा ममापि मनोरथः ।

आद्यन्तमेतदवलोक्य रसायनं मे
वक्तव्यमत्र भवतां यदुदेति चित्ते ।
एतं श्रमं न गणयन्ति यतो महान्तः
प्रायः परार्थवपुषः सुधियः पृथिव्याम् ॥

एतच्च श्रीकाशीहिन्दूविश्वविद्यालयमीमांसाध्यापकैः अस्म-त्प्रियसुहृद्वरैः एतत्संशोधनादौ सहायभूतैस्स्वीकृतपरिश्रमैश्च प्रसन्नगम्भीरेऽस्मिन् भूमिकाविलेखने, वेदविशारदैः श्रीयुक्त-चिन्नस्वामिशास्त्रिवर्यैः प्रोत्साहितेन मयेदानीं मुद्राप्य प्रका-शितमभूदिति कृतज्ञतापूर्वं सानन्दं निवेद्यते ।

यथामति संशोधितेऽप्यस्मिन् यदि किञ्चिदृज्ञसुलभानि स्खलितानि कानिचित्स्युः तानि सोढ्वा ज्ञापनेन अनुगृह्णन्तु मां महान्त इति प्रार्थयति-

| आश्विनकृष्णत्रयोदशी<br>१९८० वि०<br>८-१०-१९२३ ईसवी | ग्रन्थकर्त्ता<br>श्रीकाशीनिवासी-श्रीकृष्णशास्त्री |
|---|---|

# शुद्धाशुद्धपत्रिका ।

नवभक्तिरसायने

| पृ० | प० | अशु० | शु० |
|---|---|---|---|
| ४ | ५ | श्रयः | श्रेयः |
| ४ | १६ | अतरस | अतस्स |
| ६ | १५ | इशास्त्र | ह्शास्त्र |
| १५ | २ | श्रिताया | श्रिताय |
| १६ | ४ | मान्येंषु | मान्येषु |
| २८ | ९ | गुणाघान् | गुणौघान् |
| ३६ | ८ | पुराभिथत | पुरस्थित |
| ३९ | १४ | व्रह्मा | ब्रह्मा |
| ४४ | ४ | भोक्तु | भोक्तुं |
| ५६ | ७ | पुमर्थें | पुमर्थ |
| ६० | १६ | विनाश्य | विनाश्य |
| ६२ | ३ | एवं | एवं |

# नवभक्तिरसायनम् ।

प्रणम्य वैद्यनाथेशं
भवरोगनिवृत्तये ।
प्रणीयते मया किञ्चि-
न्नवभक्तिरसायनम् ॥ १ ॥

कारुण्यविग्रहामम्बां
कामदं गणनायकम् ।
कमलासनकान्तां च
कलयामीष्टसिद्धये ॥ २ ॥

शृङ्गगिरिपीठराजान्
देशिकनरसिंहभारतीपादान् ।
अभिनवनृसिंहपादान्
आचार्येन्द्रानहं वन्दे ॥ ३ ॥

प्रज्ञानानन्दपादाम्बुजमधुकरतां याति यस्यान्तरङ्गं
भक्तिर्यस्य प्रसिद्धा परमगुरुपदे पार्वतीप्राणनाथे ।
लक्ष्मीदेव्यामसूताष्टममिह तनयं यं सुधी रामदेवः
सोऽयं श्रीकृष्णशर्मा प्रणमति सकलान् सद्गुरून्सान्द्रभक्त्या ॥४॥

श्रीमज्जगद्गुरुपदप्रवरप्रसिद्ध-
शृङ्गाद्रिपीठपतिपण्डितकेसरीन्द्राः ।
आसन्निहाभिनवपूर्वनृसिंहभार-
त्याख्याश्च ये परमहंसकुलावतंसाः ॥ ५ ॥

तेषामपारकरुणावरुणालयाना
माचार्यशंकरगुरोरवतारभाजाम् ।
पादारविन्दमकरन्दमधुव्रतोऽयं
कृष्णः करोति विदुषामिदमुत्सवाय ॥ ६ ॥

अज्ञानतस्खलितमत्र यदागतं मे
सन्तस्समस्तमपि तत्सदयं सहन्ताम् ।
दोषान्विहाय गुणमेव परस्य यस्मात्
प्रख्यापयन्ति सुधियस्सहनस्वभावाः ॥ ७ ॥

नानादेशनिवासदुःखमखिलं सोढ्वा चिरात्संचितै-
र्नानाशास्त्रगुरूपदेशकुसुमस्तोमार्थमाध्वीरसैः ।
एतद्भक्तिरसायनं विरचितं सारं मया सादरं
सेवन्तां सरसं सुखेन सुधियः स्वाराज्यसौख्यप्रदम् ॥ ८॥

अज्ञातवेदस्मृतिगौरवाणा-
मपीदमामोदकरं नराणाम् ।
आधातुमन्तर्नवभक्तियोग-
मायासलेशेन विना करोमि ॥ ९ ॥

यस्यास्ति भक्तिर्गुरुदेवतादौ
स्वाभाविकी तस्य नरोत्तमस्य ।
सर्वे पुमर्थाः प्रभवन्ति तस्मा-
द्भक्तिं विधत्ते श्रुतिरादरेण ॥ १० ॥

सुखाप्तये दुःखनिवृत्तये वा
समस्तलोकाश्च सदा यतन्ते ।
तथापि तत्साधनमोहमात्रा-
त्समीहिते ते लभते न कोऽपि ॥ ११ ॥

आचार्यदेवद्विजभक्तिपूर्वं
यश्शास्त्ररीत्या कुरुते प्रयत्नम् ।
तस्याचिरेणैव समीहितार्थाः
सिध्यन्ति सर्वे नरपुङ्गवस्य ॥ १२ ॥

श्रेयःप्रदानाय नृणां प्रसिद्धं
मार्गत्रयं शोभनमागमेषु ।
आदौ स्वधर्मः परतश्च भक्तिः
ज्ञानं ततस्तु प्रथितं क्रमेण ॥ १३ ॥

तत्रोत्तमां भक्तिमुदाहरन्ति
श्रुत्यन्तसिद्धान्तविदो महान्तः ।
बाह्यार्थसामग्र्यनपेक्षणाद्द्राङ्मो—
क्षप्रदत्वाच्च सुखेन पुंसाम् ॥ १४ ॥

धर्मस्स्वसिध्यै सुतदारवित्तगो-
वर्णाश्रमाङ्गानि बहून्यपेक्षते ।
फलं च दत्ते किल नश्वरं चिरा-
दतस्स दुस्साध्यतमः स्मृतो बुधैः ॥ १५ ॥

ज्ञानं पुनर्भोगविरक्तिमन्त—
शमादिषट्कं च मुमुक्षुतां च ।
अपेक्षते हि श्रवणादि पूर्वं
ध्यानं चिरं सादरमेव सिध्यै ॥ १६ ॥

भक्तिस्तु वर्णाश्रमदारपुत्र-
वित्तादि नो किञ्चिदपेक्षते च ।
समस्तकामप्रदकल्पवल्ली
प्रशस्यते सैव ततो महद्भिः ॥ १७ ॥

भक्त्या विहीनो यदि, सार्वभौमो
महादरिद्रेण समान एव ।
शाखाफलाढ्यस्तरुरुन्नतोऽपि
स्थातुं नहीष्टे गतमूलबन्धः ॥ १८ ॥

समस्तशास्त्रार्थविशारदोऽपि
भक्त्या विहीनो यदि, मूढ एव ।
खरस्तु किं ! कुंकुमभारवाही
संस्तूयते तत्सुखगन्धशून्यः ॥ १९ ॥

भक्तिर्यदि स्यात्पुरुषाधमोपि
स्वयं समस्स्यात्पुरुषोत्तमेन ।
सम्राट्प्रसादे सति भाग्ययोगा-
द्रङ्कोपि न स्यात्किमु राजतुल्यः ॥ २० ॥

निरस्तशाखाफलपत्रपुष्प-
स्तरुर्यदि स्याद्दृढमूलबन्धः ।
तदा सकृद्वर्षजलेन यद्व-
त्समृद्धपत्रादिरवेक्ष्यते सः ॥ २१ ॥

एवं दरिद्रोऽपि जडोऽपि लोको
भक्तो यदि स्याद्भगवत्पदाब्जे ।
क्षणेन सम्राडपिगीष्पतिश्च
स जायते सिद्धपुमर्थसार्थः ॥ २२ ॥

सेयं हि भक्तिर्बहुजन्मकोटि-
पुण्यैर्महाभाग्यवतामुदेति ।
मेधाविनश्शास्त्रविशारदाश्च
लोके यतस्तामिह नो लभन्ते ॥ २३ ॥

पापाशयानां सुलभा न भक्तिः
पादारविन्दे परमेश्वरस्य ।
पित्तातिरेकोपहतेन्द्रियाणां
कथं ! हि जायेत रुचिस्सितायाम् ॥ २४ ॥

पित्तेन सर्वं मधुरं गुडादि
तिक्तात्मना भाति हतेन्द्रियस्य ।
तथा सदानन्दघनः परात्मा
पापेन भात्याप्रियवज्जडस्य ॥ २५ ॥

पित्तेन दूनस्य यथा हि तिक्तं
द्रव्यं समस्तं मधुरं विभाति ।
एवं महापापहतात्मनो हि
पापात्मकं सर्वमपि प्रियं स्यात् ॥ २६ ॥

संसारबन्धं विनिहन्ति सद्य-
स्समस्तसौख्यं च ददाति या वै ।
आयासलेशेन विनैव लभ्यां
तामीशभक्तिं लभते हि धन्यः ॥ २७ ॥

पूज्येषु देवादिषु या निधीयते
प्रीतिः परा सैव हि भक्तिरुच्यते ।
बालेषु वात्सल्यमितीर्यते बुधैः
स्नेहो वयस्येषु यदि क्रियेत सा ॥ २८ ॥

प्रीतिश्च पत्न्यां यदि सोऽनुरागः
साऽनुग्रहस्स्याद्यदि शिष्यवर्गे ।
एकैव सा प्रीतिरनेकनाम-
स्थानप्रभेदाल्लभते ऽम्बुवच्च ॥ २९ ॥

यथैकमेवाम्बुदमम्बु लोके
स्थानादिभेदात्फलनामभेदम् ।
धत्ते सरित्कूपतटाकगङ्गा-
समुद्रकुल्याल्पसरोमुखेषु ॥ ३० ॥

स्नानेन कूपादिषु बाह्यमेव
मलं गळेन्नान्तरमात्मभाजाम् ।
गङ्गादितीर्थेषु मलद्वयञ्च
स्नानेन नश्येत्सहसा यथैव ॥ ३१ ॥

एवं कृता प्रीतिरुमासहाये
संसारदुःखं सकलं निहन्ति ।
आनन्दमन्तः कुरुते च नित्यं
सान्यत्र चेत्क्षुद्रफलं ददाति ॥ ३२ ॥

एकैव रेखा शतकोटिलक्ष-
सहस्रखर्वात्मकतां प्रयाति ।
स्थानैकभेदेन यथा तथैव
प्रेमापि भक्त्यादिविशेषमेति ॥ ३३ ॥

प्रियात्मदारात्मजबन्धुलोक-
स्थाने कृतं प्रेम शरीरभाजाम् ।
ददाति मिथ्यासुखमल्पमून-
स्थानसंख्येव तदीयबुद्धिम् ॥ ३४ ॥

तदेव सर्वेश्वरपादपद्म-
स्थाने कृतं प्रेम तु भक्तिभाजाम् ।
अनन्तसंख्येव तदीयबुद्धि-
मनन्तमानन्दमभिव्यनक्ति ॥ ३५ ॥

हिताहितप्राप्तिकरी नराणां
　　प्रीतिर्हि देवे विषयेषु च स्यात् ।
शत्रौ स्वदेहे च निवेश्यमाना
　　क्रमेण हस्तासिलतेव तीक्ष्णा ॥ ३६ ॥

यथैक एवांबुदवारिबिन्दु-
　　र्मुक्ताफलं शुक्तिमुखं गतस्सन् ।
मुक्तानिभः पङ्कजपत्रगस्सन्
　　न दृश्यते तप्ततलं गतश्च ॥ ३७ ॥

प्रेमा तथैवात्र सुतादिवर्गे
　　दुःखप्रदो भाति सुखभ्रमश्च ।
स एव सर्वेश्वरपादपद्मं
　　प्राप्तः परानन्दफ[illegible]ाति ॥ ३८ ॥

एतादृशीं भक्तिमहो न मोहा-
　　द्यो मन्दभाग्यो लभते मनुष्यः ।
तं दुर्लभं जन्म विनाशयन्त-
　　मात्मद्रुहं धिक्पुरुषाधमाख्यम् ॥ ३९ ॥

अस्त्येव सर्वस्य कलत्रपुत्र-
क्षेत्रादिषु प्रीतिरियं स्वभावात् ।
तामेवकैवल्यफलां विधातु-
मीशार्पणान्नेच्छति मन्दभाग्यः ॥ ४० ॥

अमूल्यमुक्ताफलरत्नमालां
पेटीगतामात्मगले निधातुम् ।
यथा श्रमो नास्ति तथाऽऽत्मसंस्थां
प्रीतिं जनस्येश्वरपादपद्मे ॥ ४१ ॥

ऐन्द्रं पदं चान्द्रमसं पदं यो
ब्राह्मं पदं वा नयते सुभक्तान् ।
स एव पापान्नयते च लोका-
नीशो विचित्रानपि रौरवादीन् ॥ ४२ ॥

गुरुर्गुरूणामपि पूर्वजानां
कालापरिच्छिन्नतया महेशः ।
सर्वज्ञबीजं किल यत्र नित्यं
निरस्तसर्वातिशयं चकास्ति ॥ ४३ ॥

क्लेशा[1]शयै[2]: कर्म[3]विपाक[4]पूर्वै-
स्सदाऽपरामृष्टनिजस्वरूपः ।
आनन्दपूर्णाद्वयसत्यमूर्ति-
स्स्वयंप्रकाशः पुरुषोत्तमोयम् ॥ ४४ ॥

एकश्वेतातपत्रोन्नतपदविलसच्चामरस्वर्णदण्डाः
सम्राजो यद्वदन्यक्षितिपतिनिवहे लक्षणं स्यात्तटस्थम् ।
विश्वस्थित्यन्तसर्गेष्वतिशयरहितं ज्ञानशक्त्यादिमत्वं
तद्वत्सर्वेश्वरस्य त्रिदशवरगणे लक्षणं शास्त्रसिद्धम् ॥ ४५ ॥

पद्माक्षत्वत्रिदैर्घ्याद्यवयवमहिमा[5] लक्षणं स्याद्यथैव
सम्राजो धर्मसिंहासनवरमहिषीसौधतुल्यस्वरूपः ।
सत्यज्ञानादि सर्वं भवति भगवतो लक्षणं स्यात्तथेदं
नित्यं व्यावृत्तमन्यामरवरनिकरात्सर्वतोऽप्येकरूपम् ॥ ४६ ॥

सामन्तभूपनिकरान्करदानम्रा-
न्प्राकारदुर्गबलकोशपरिच्छिदाभिः ।
यद्वन्नियच्छति बलादिह सार्वभौम-
स्तद्वत्समस्तविबुधानपि देवदेवः ॥ ४७ ॥

---

१ अविद्यादयः. २ भोगानुकूला वासनाः. ३ धर्माधर्मादिरूपं.
४ जात्यायुर्भोगाः. ५ भ्रूबाहुमुष्कैदैर्घ्यादि सामुद्रिकालक्षणमिति यावत्.

यथाऽपरिच्छिन्नबलांगपूर्णां
साम्राज्यलक्ष्मीं स्वयमेक एव ।
भुनक्त्यनन्यां नृपसार्वभौम-
स्तथाखिलैश्वर्यमपीश्वरस्स्वयम् ॥ ४८ ॥

नान्तःपुरस्थितममुं नृपसार्वभौमं
सर्वे यथेक्षितुमपि प्रभवन्ति भृत्याः ।
एवं निरस्तगुणरूपनिजप्रतिष्ठं
देवं न वीक्षितुमिमे विषयैषिलोकाः ॥४९ ॥

रूपादिहीने किल निर्गुणेऽस्मि—
न्नानन्दबोधैकघनस्वरूपे ।
गतिर्न जायेत चलन्मतीनां
धराचराणां सुरवर्त्मनीव ॥ ५० ॥

मर्त्यो यथा भूतलमात्रचारी
नीरेऽम्बरे वा चरितुं नहीष्टे ।
तथा मनः पञ्चगुणैकवृत्ति--
शीलं न शक्नोति हि निर्गुणेऽस्मिन् ॥ ५१ ॥

शुद्धान्तसंस्थितमपि प्रभवन्ति केचि—
दान्ताः पतिं परिजनाः किल सेवितुं तम् ।
एवं मुनीन्द्रातिलकास्सनकादयस्तु
तं निर्गुणं शिवमुपासितुमीशते हि ॥ ५२ ॥

दुष्टान्प्रशासितुमयं क्षितिसार्वभौम-
श्शिष्टांश्च रक्षितुमनेकविधाङ्गयुक्तः ।
धर्मासनं निविशते कृपया यथैवं
देवोऽप्ययं सगुणमूर्तिमनन्तशक्तिः ॥ ५३ ॥

साकल्यवैकल्ययुताङ्गयोगे-
ष्येको हि सर्वत्र स सार्वभौमः ।
सन्दृश्यते तद्वदयं परात्मा
सौगुण्यनैर्गुण्यकथासु चैकः ॥५४॥

छत्रादिभिः पुरहिताय गृहीतवेषै-
र्नान्यो यथा भवति सौधगतात्स सम्राट् ।
भक्तावनाय विधृतैर्गुणमूर्तिभेदै-
र्नान्यस्तथा भवति निर्गुणतस्स देवः ॥ ५५ ॥

यद्वत्प्रसादितमनाः क्षितिसार्वभौम-

स्सेवाभिरादरयुताभिरुपाश्रिताया ।

मेधाविने परिजनाय निजं स्वरूपं

एकान्तसंस्थमपि दर्शयति क्रमेण ॥ ५६ ॥

तद्वच्चिरान्नवविधाभिरतिप्रसन्नः

सेवाभिरात्मचरणं शरणं गताय ।

पुण्यात्मने विमलबोधसुखस्वरूपं

आत्मानमेव बत दर्शयति स्वयंभूः ॥ ५७ ॥

सर्वज्ञ एष भगवानपि सर्वशक्त-

स्सर्वेश्वरोऽपि करुणावरुणालयत्वात् ।

संसारिणां भजनमात्रकथाप्रसंगे

स्वाधीन एव भवति प्रणतार्तिहन्ता ॥ ५८ ॥

कर्मानुरूपमखिलं जगदात्मशक्त्या

तिर्यङ्मनुष्यमुनिदेवविचित्रमेतत् ।

लीलामयं सृजति पक्षविपक्षहीन-

स्सर्वेश्वरो नृपतिमौलिरिव स्वतन्त्रः ॥ ५९ ॥

उच्चावचं त्रिविधकर्मफलं वितन्व-
न्रागादिमान्न हि भवेद्भगवान्प्रजासु ।
दण्ड्येषु दण्डविधिना नृपालमौलि-
र्मान्येषु मानविधिना नहि पक्षपाती ॥ ६० ॥

धान्याङ्कुरान्प्रति यथा जलदोऽविशेषा-
त्साधारणं भवतिकारणमेव लोके ।
तेषां विशेषविधया सुविचित्रतत्त-
द्बीजानि शालियवद्रमुखे विशेषे ॥ ६१ ॥

भूतौघसर्जनमुखेषु तथेश्वरोऽपि
साधारणं भवति कारणमेव नित्यम् ।
देवर्षिमानवविहङ्गविचित्रस
तत्तत्कृताघसुकृतानि कारणानि ॥ ६२ ॥

मध्यस्थकर्मणि सभासु नियुक्तकः
सद्वादिनं वदति सद्वदसीति विद्वान् ।
दुर्वादिनं वदति दुर्वदसीत्यथापि
मध्यस्थ एव विदितस्स तथेशः ॥ ६३ ॥

सत्कर्मदुष्कर्मसु लोकजालं
प्रवर्तयन्नप्युदयेन सूर्यः ।
न लिप्यते लौकिककर्मलेशै-
र्यथा तथाऽयं भगवानसङ्गः ॥ ६४ ॥

अन्तःस्थितस्सन् यमयत्यशेष-
भूतानि तल्लेपविशेषशून्यः ।
सर्वेश्वरः केवलसन्निधाना-
दचिन्त्यमायाबलपूर्णशक्तिः ॥ ६५ ॥

जीवो यथा जीवनमन्तरेण
न शक्नुते जीवितुमत्र सर्वः ।
तथान्तरात्मानमिमं महेशं
विना न जीवेत्क्षणकालमेषः ॥ ६६ ॥

ईशप्रसादेन विना न किञ्चि-
च्छ्रेयोऽधिगन्तुं क्षमते बुधोऽपि ।
अतः प्रसादाय शिवस्य भक्ति-
स्संपादनीया पुरुषार्थकामैः ॥ ६७ ॥

एवं स्वरूपं कथितं हि भक्ते-
र्महेश्वरस्यापि मया समासात् ।
तत्साधनं सांप्रतमुच्यतेऽस्मिन्
संप्राप्यते येन जवेन भक्तिः ॥ ६८ ॥

तत्रादिमं साधनमुग्रदोष-
दृष्ट्या महारोगमतिर्भवेऽस्मिन् ।
रोगं ह्यविज्ञाय न कोऽपि रोगी
वैद्यान्तिकं गन्तुमुपक्रमेत ॥ ६९ ॥

महोदरं रोगमुपागतं स्वं
लक्ष्मीविलासोदरमीक्षमाणः ।
कथं गवेषेत नरश्चिकित्सां
भिषग्वरं वा निजरोगशान्त्यै ॥ ७० ॥

संसारमेवं बहुदुःखमूल-
मानन्दमन्तः कलयन्मनुष्यः ।
किमर्थमन्विष्यति भक्तियोगं
संसारशान्त्यै परमेश्वरं वा ॥ ७१ ॥

अतस्सदा जन्मजराऽऽधिमृत्यु-
दुःखादिकं दुस्सहमेव मत्वा ।
दुःखात्मकं वेत्ति भवं पुमान् य-
स्स एव भक्तिं तनुते हिताय ॥ ७२ ॥

इहाप्यमुत्रापि सुखप्रदां यो
भक्तिं न कुर्याद्भगवत्पदाब्जे ।
अपारसंसारसमुद्रमध्ये
मज्जत्ययं दुःखतरङ्गजाले ॥ ७३ ॥

अन्यत्पुनस्साधनमन्तकारे-
स्संसारवैद्येश्वरशेखरस्य ।
अनन्तकल्याणगुणावबोधो
भिषग्गुणज्ञानमिवार्तजन्तोः ॥ ७४ ॥

न वैद्यवर्यस्य गुणप्रकर्ष-
मजानतस्तद्गमनं घटेत ।
तथेश्वरस्यामितवैभवादी-
नजानतां तद्भजनं न सिध्येत् ॥ ७५ ॥

अतो जनानामवबोधनाय
पुराणवाचः किल वर्णयन्ति ।
निरस्ततुल्यातिशयं गुणानां
महाप्रभावं परमेश्वरस्य ॥ ७६ ॥

स्नेहो यथा मित्रगुणावबोध-
क्रमानुसारेण हि वृद्धिमेति ।
भक्तिर्महादेवगुणप्रभाव-
ज्ञानानुसारं परिपाकमेति ॥ ७७ ॥

आदौ वधूर्भर्तृगृहं स्वगेहा-
द्गन्तुं यथा रोदिति नीयमाना ।
ततश्शनैर्भर्तृसुखावबोधा-
न्नैवेहते मातृगृहं प्रयातुं ॥ ७८ ॥

दारापत्यगृहप्रपंचविषयादादौ जगन्नायकं
गन्तुं बुद्धिरियं बिभेति किल तत्सज्ञानभिज्ञा स्वयम् ।
ज्ञाते तद्रसवैभवे सति शनैस्सैवेश्वरोपासना—
दागन्तुं विषयान्पुनर्बहुविधं क्लेशं समालंबते ॥ ७९ ॥

अतश्च भक्तिं प्रति कारणत्वा-
द्भक्त्यात्मनैव श्रवणादि गण्यम् ।
साध्यात्मनापि व्यवहाररीति-
स्तत्साधनानां जगति प्रसिद्धा ॥ ८० ॥

सन्तोषहेतुस्सगुणस्य शंभो-
र्यो निर्गुणस्याप्यथवा प्रयत्नः ।
कायेन्द्रियान्तःकरणादिनिष्ठ-
स्स उच्यते भक्तिरितीह सद्भिः ॥ ८१ ॥

एवं च भक्तिर्नवधा प्रभिन्ना
प्रस्तूयते सर्वपुराणमध्ये ।
यल्लाभमात्रेण समस्तसिद्धिं
हस्तङ्गतामेव वदन्ति भक्ताः ॥ ८२ ॥

कल्याणशीलश्रवणं पुरारे-
राद्यं महान्तो निगदन्ति सन्तः ।
ततस्तु तत्कीर्तनमादरेण
प्राहुस्तृतीयं स्मरणं च तस्य ॥ ८३ ॥

आहुश्चतुर्थं पदसेवनं तु
तस्यार्चनं पञ्चममीरयन्ति ।
षष्ठं पुनर्वन्दनमाहुरार्या
दास्यं पुनस्सप्तममेव तस्य ॥ ८४ ॥

तत्राष्टमं सख्यमुदाहरन्ति
सर्वेश्वरस्यात्मनिवेदनन्तु ।
सर्वोत्तमत्वान्नवमं वदन्ति
स्वयं समस्तस्य फलं यदेव ॥ ८५ ॥

सर्वेषामपि रक्षको जनिमतां सर्वेश्वरस्सर्ववि-
त्सत्यज्ञानसुखात्मकस्स भगवान्क्षन्ता समस्तागसां ।
कारुण्यामृतवारिधिश्च सुलभः स्मृत्यैव चित्ते सदा
वाञ्छातोऽप्यधिकप्रदश्चममृते सेव्यस्समस्तैरपि ॥८६॥

भक्त्यैवाशु वशंवदः पदजुषां नापेक्षते साधनं
तत्तुल्याधिकवर्जितोऽपरिमितज्ञानप्रभावादिना ।
इत्येतादृशसद्गुणाश्रयमहागाथासमाकर्णनं
श्रोत्राभ्यां श्रवणं वदन्ति सुधियः तत्रादिमं कारणम् ॥८७॥

श्रद्धासमेतं बहुधा श्रुतानां
जगन्नियन्तुर्गुणवैभवानाम् ।
संकीर्त्तनस्तोत्रसमीरणादि
वाचा हि तत्कीर्तनमाहुरार्याः ॥ ८८ ॥

अनेकवारं श्रवणेन नित्यं
संकीर्तनेनेश्वरसद्गुणानाम् ।
पुनः पुनः संस्मरणं यदन्त-
स्तृतीयमाहुः स्मरणं तदेव ॥ ८९ ॥

भक्तित्रयाभ्यासवशेन नित्यं
संक्षीयमाणे सति पूर्वपापे ।
शनैः पुमान् पादनिषेवणाय
प्रगल्भतेऽयं परमेश्वरस्य ॥ ९० ॥

देवालयादौ परितः प्रभाते
संमार्जनं गोमयलेपनं वा ।
भक्तोत्तमानां पदमर्दनं वा
स्नानोदपानादिसमर्पणं वा ॥ ९१ ॥

वाचा शरीरेण धनादिना वा
प्रवर्तनं देवगृहस्य यच्च ।
उद्धारणालंकरणादिहेतो-
श्चतुर्थमेतत्पदसेवनं स्यात् ॥ ९२ ॥

नानोपचारादियुतं शिवस्य
विचित्रभक्ष्यान्नविभूषणाद्यैः ।
आराधनं धूपसुदीपपुष्पैः
सहस्रनामार्चनमर्चनं स्यात् ॥ ९३ ॥

एवं चिरादर्चयतो महेशं
भक्तस्य बुद्धिर्भवतीत्थमन्तः ।
सुरासुराधीशकुलार्च्यमानं
का शक्तिरद्यार्चयितुं ममेति ॥ ९४ ॥

एव विनिश्चित्य सदापराध-
निवृत्तये वन्दनमातनोति ।
साष्टाङ्गमानन्दजबाष्पनेत्रः
सगद्गदोऽयं पुलकाङ्कितः सन् ॥ ९५ ॥

एवं चिराभ्यासवशेन सर्वं
कलत्रपुत्रादि निरर्थकं मे ।
श्रेयःप्रदाता भगवान् सदैवे-
त्यालोच्य भक्तः शरणागतः स्यात् ॥ ९६ ॥

अनन्यबुद्ध्या शरणागतिर्या
विक्रीतपश्वादिवदस्तचिन्तम् ।
शरीरबुद्ध्यात्मदशेन्द्रियाणां
तत्सप्तमं दास्यमुदाहरन्ति ॥ ९७ ॥

यथैव विक्रीतगवादिचिन्तां
न कोपि लोके कुरुते तथाऽयम् ।
समर्पितानां भगवत्पदाब्जे
देहेन्द्रियाणां न करोति चिन्ताम् ॥ ९८ ॥

शृण्वन् कदाचिद्भगवद्गुणौघान्
कदापि तन्नामसुधां पिबंश्च ।
तदेकचित्तेन्द्रियदेहचेष्टः
सदा हसंस्तिष्ठति दास्यनिष्ठः ॥ ९९ ॥

निरूपिता सप्तविधापि भक्तिः
निगद्यते साधनरूपिणीति ।
आसप्तमाभ्यासबलेन यस्मात्
सख्याह्वयां भक्तिमुपैति भक्तः ॥ १०० ॥

सा प्रेममात्रा परमा हि भक्तिः
प्रशस्यते साधनसाध्यरूपा ।
आसप्तमानां भजतां फलत्वात्
अन्त्यस्य हेतुत्वकथाश्रयाच्च ॥ १०१ ॥

तामष्टमीं भक्तिमुपेत्य सन्तः
सख्याभिधां भागवता भवन्ति ।
ईशैकभक्तात्ममनःशरीराः
सन्दर्शनेनैव जगत्पुनन्तः ॥ १०२ ॥

सख्ये यथा स्निह्यति सर्वलोकः
प्रशस्तभक्ष्यादि वितीर्य भुङ्क्ते ।
सर्वं च गुह्यं कथयत्यमुष्मै
सदा सखायं त्वनुवर्तते च ॥ १०३ ॥

सखिप्रशंसां शृणुते च मोदा-
त्तद्दोषवादान् सहते न चैव ।
स्वकार्यमित्येव धिया तदीयं
कार्यं समस्तं सहसा करोति ॥ १०४ ॥

तथा सदा स्निह्यति साम्बमूर्तौ
सख्यं भजन् भागवतोत्तमोऽयम् ।
पुष्पं फलं यत्सकलं च भक्ष्यं
सर्वं निवेद्यैव शिवस्य भुङ्क्ते ॥ १०५ ॥

तत्स्तोत्रगाथां शृणुते प्रमोदात्
तद्दूषणं खण्डयति स्वयं च ।
स्वकार्यबुद्ध्यैव करोति सर्वं
माहेश्वरं कर्म कुतूहलेन ॥ १०६ ॥

सन्तोषवार्तामपि दुःखवार्तां
निवेदयत्याप्तधिया महेशे ।
आज्ञां पुरस्कृत्य च तस्य नित्यं
प्रवर्तते कर्मसु भक्तवर्यः ॥ १०७ ॥

संस्मृत्य संस्मृत्य गुणानसंख्यान्
कारुण्यपूरातिशयं च विष्णोः ।
आनन्दधाराममितामिवान्तः
नेत्राम्बुधारामयमादधाति ॥ १०८ ॥

शृण्वन् कदाचिद्भगवद्गुणौघा-
नुद्घोषयन् जातुचिदाप्तसंघे ।
कदापि सर्वेश्वरमर्चयंश्च
कालं नयत्येवमयं महात्मा ॥ १०९ ॥

गायन् क्वचिच्छ्रीभगवद्गुणाघान्
ध्यायंश्च कुत्रापि निमीलिताक्षः ।
नृत्यन् प्रहर्षात् कुहचिद्धसन्वा
कालंनयत्येवमयं महात्मा ॥ ११० ॥

साध्वी यथा स्वप्रियपादपद्मं
सिन्धुर्यथा वा सरितां पतिं च ।
तथैव भक्तान्तरचित्तवृत्तिः
सदानुगच्छेत्भगवत्पदाब्जम् ॥ १११ ॥

संदर्शनेनैव समस्तदुःखं
निवारयन्नक्षिपथं गतानाम् ।
स्वतुल्यभावं च दिशन् जनानां
जयत्ययं लोकहिताय लोके ॥ ११२ ॥

पवित्रयन् पादरजःपयोभि
र्विचित्रपापानपि दीनलोकान् ।
अमित्रमित्रादिविभेदशून्य-
श्चरित्रचित्रश्चरतीह धन्यः ॥ ११३ ॥

एतादृशानान्तु महाशयानां
भक्तोत्तमानां दृशि ये पतन्ति ।
तदैव पूताः सुकृतातिरेका-
द्भक्तिं परां ते मनुजा लभन्ते ॥ ११४ ॥

अतः समस्तेषु च साधनेषु
प्रशस्तमाहुः किल भक्तसङ्गम् ।
येनाचिरेणैव विनाऽन्यहेतून्
भक्तिं दृढामेव जना लभन्ते ॥ ११५ ॥

यथा धनाढ्यैकनिषेवणेन
धनार्थिभिर्द्रव्यमुपार्ज्यते ऽत्र ।
तथैव भक्तैकनिषेवणेन
संपाद्यते भक्तिरपि प्रशस्ता ॥ ११६ ॥

आत्मार्चनादप्यधिकं प्रियं स्यात्
भक्तार्चनं श्रीपुरुषोत्तमस्य ।
प्रत्यक्षसिद्धाः किल मूर्तिभेदा-
स्तस्यैव विष्णोः परमार्थभक्ताः ॥ ११७ ॥

अन्तःस्थितानन्तविधभ्रमार्त्ति-
संदेहपङ्कानि वचोमृतेन ।
विशोध्य भक्तान् रचयन्ति साक्षात्
क्षणेन पापानपि भक्तवर्याः ॥ ११८ ॥

तस्मात्प्रयत्नेन तु भक्तिकामै-
राराधनीयाः शिवभक्तवर्याः ।
श्रद्धासमेतं फलपुष्पवस्त्र-
भिक्षोपचारैः स्वबलानुरोधात् ॥ ११९ ॥

सत्या यदि स्यात् भगवत्पदाब्जे
भक्तिस्तदा भक्तजनेष्वपि स्यात् ।
पत्नीषु रूढो ह्यनुरागभागः
संदृश्यते श्यालजनेषु नृणाम् ॥ १२० ॥

भक्तेषु न प्रीतिरुदेति यस्य
न तस्य भक्तिः पुरुषोत्तमेऽपि ।
श्यालादिषु प्रीतिविहीनबुद्धेः
पत्न्यामसक्तिस्त्वनुमीयते हि ॥ १२१ ॥

जपादिना पत्रफलादिना वा
दरिद्रभक्तस्य मुदं प्रयाति ।
धनाढ्यभक्तस्य तु भूरिसंप-
त्समर्पणेनैव मुदं महेशः ॥ १२२ ॥

धनानुसारेण धनैश्च पूजां
धनी न कुर्याद्यदि शङ्करस्य ।
तदा न भक्तिर्हृदयेऽस्ति तस्ये
त्ययं हि वादः श्रुतिलोकसिद्धः ॥ १२३ ॥

धनी यदि स्यात्परमार्थभक्तः
तदा तु कुर्याद्धनदानपूजाम् ।
दारात्मजादीन् धनिकाः प्रियान् स्वान्
भूषाम्बराद्यैः किल मानयन्ति ॥ १२४ ॥

विचित्रभूषाम्बरभोज्यदानै-
रमानितं स्वात्मजदारलोके ।
प्रीतिर्हि मिथ्या धनिकस्य सिद्ध्येत्
यथा तथा भक्तिरपीश्वरादौ ॥ १२५ ॥

प्रीतेरयं तु प्रथितः स्वभावो
यद्दापयत्यर्थमनर्थिनेऽपि ।
स्वपात्रभूताय जनाय लोके
निजाश्रयेण द्विपदां वरेण ॥ १२६ ॥

प्रीतः प्रियायै धनिकस्तदिष्टान्
हाराम्बरादीननुमाय पूर्वम् ।
यथा प्रदत्ते स्वयमेव तद्व-
न्महेश्वरायापि धनी स भक्तः ॥ १२७ ॥

स्वतृप्तिहेतोः सुतदारवर्गाः
वृण्वन्ति नाथाद्विषयान् यथा हि ।
तथा न किंचिद्वृणुते स्वहेतो-
रानन्दपूर्णो भगवान् जनेभ्यः ॥ १२८ ॥

क्षुधार्दितो वेह तृषार्दितो वा
काप्यन्नपानादि कदापि कंचित् ।
संप्रार्थयन् केनचिदीश्वरोऽयं
किं ! श्रूयते किं ! नु समीक्ष्यते वा ॥ १२९ ॥

क्षेत्राणि बीजानि बहु प्रदातुं
गृह्णन्ति यद्वद्धि कृषीवलेभ्यः ।
गृह्णाति तद्वत्परमेश्वरोऽर्थान्
बहु प्रदातुं कृपया भजद्भ्यः ॥ १३० ॥

सहस्रसंख्यं गुणमत्र दातुं
गृह्णाति सूर्यः सलिलं यथा वा ।
तथा प्रदातुं पुरुषार्थवर्गान्
गृह्णाति पूजां भजतां महेशः ॥ १३१ ॥

ईशप्रसादोदितमर्थजातं
यस्त्वीश्वरायाप्यनिवेद्य भुङ्क्ते ।
कृतघ्नतापापहतः स मूढो
न तत्फलं विन्दति चोरवृत्तिः ॥ १३२ ॥

आदर्शदृष्टप्रतिबिम्बमूर्ते-
रलंक्रियायै मणिवस्त्रमाल्यैः ।
बिम्बात्मनोऽलंकरणं विना न
ह्युपायलेशोऽस्ति यथा प्रसिद्धः ॥ १३३ ॥

तथैव जीवस्य विशिष्टभोग-
प्राप्त्यै महेशाय तदर्पणादि ।
उपायमेकं प्रविहाय किंचित्
मार्गान्तरं नास्ति जगत्त्रयेऽपि ॥ १३४ ॥

तस्मान्महादेवतदीयभक्त-
द्विजादिपूजा स्वहिताय कार्या ।
सर्वैर्यथाशक्ति जनैरितीदं
समस्तशास्त्रार्थरहस्यमुक्तम् ॥ १३५ ॥

सख्याह्वया भक्तिरपि द्विधा स्यात्
तवाहमस्मीश ! ममासि चेति ।
प्रेमातिरेकामृतपाकभेद—
क्रमेण सौभाग्यवतामुदेति ॥ १३६ ॥

ऐक्यानुसंधानवशेन भेदे
गतेऽपि सर्वेशतदात्मनोश्च ।
ईशस्य दासोस्म्यहमित्यवैति
प्रागत्र भक्तोऽम्बुनिधेरिवोर्मिः ॥ १३७ ॥

अभ्यासयोगात्परिपाकमेवं
प्राप्ते तु सख्ये भगवत्प्रियोऽयम् ।
जानाति पश्चाद्भगवान्ममेति
स्वाधीनतामेव शिवस्य पश्यन् ॥ १३८ ॥

सख्यात्मभक्तेः परिपाकलाभा--
दनन्तरं भागवतोत्तमोऽयम् ।
शनैश्शनैरात्मनिवेदनाख्यां
भक्तिं प्रशस्तां नवमीमुपैति ॥ १३९ ॥

संप्राप्य तां स्वस्य महेश्वरेण
भेदं न जानाति कदाप्ययं तु ।
सर्वं जगत्स्थावरजङ्गमादि
परात्मनाऽऽलोकयति प्रहृष्टः ॥ १४० ॥

दुःखायते दुःखितदर्शनेन
सुखायतेऽसौ सुखितेक्षणेन ।
अत्यन्तशुद्धाशयदर्पणोऽयं
पुरःस्थितात्मप्रकृतिं दधाति ॥ १४१ ॥

स्वामिंस्त्वमेवाहमहं त्वमेवे-
त्यन्योन्यमैक्यं परमार्थभूतम् ।
आलोकयन् सन्ततमन्तरङ्गे
ज्ञानी भवेद्भागवतोत्तमोऽयम् ॥ १४२ ॥

ज्ञानी महाभागवतोत्तमोऽयं
ज्ञानी च योऽयं भजतां वरिष्ठः ।
नास्त्येतयोर्भेदकथेति साक्षा-
द्रहस्यमुक्तं भगवन्मुखेन ॥ १४३ ॥

अत्यन्तगंभीरमिदं रहस्य-
मज्ञानदोषेण गुरोरबुध्वा ।
ज्ञानस्य भक्तेरपि भूरिभेदं
कुर्वन्ति केचिज्जडमोहवादैः ॥ १४४ ॥

एतन्निमित्तानि समस्तशास्त्रा-
ण्येतन्निमित्तास्सकलाश्च वेदाः ।
सर्वे च धर्माः पुनरेतदर्था
स्सर्वे च योगाः परमेतदर्थाः ॥ १४५ ॥

अत्रैव सर्वः पुरुषः कृतार्थ-
स्सम्पद्यतेऽत्रैव विमुक्तबन्धः ।
अत्रैव सर्वान् लभते पुमर्था
नत्रैव शास्त्राणि च तत्पराणि ॥ १४६ ॥

एवं मयेदं नवभक्तिभेद-
स्वरूपमुक्तं निजबुद्धिशुध्यै ।
इतः परं श्रीभगवत्स्वरूप-
रहस्यमेव प्रतिपाद्यतेऽत्र ॥ १४७ ॥

यो यस्य तत्त्वस्य हि तत्वमन्त-
जीनाति सम्यक्पुरुषः प्रयत्नात् ।
स एव तत्तत्त्वफलं यथाव-
त्प्रगल्भते लब्धुमिति प्रसिद्धम् ॥ १४८ ॥

अतत्त्ववेत्तुर्मणितत्त्ववेत्तु-
श्चालोक्यते तत्फलतारतम्यम् ।
तत्पूर्णमूल्याप्त्यनवाप्तिरूपं
सर्वैर्जनैस्तन्मणिविक्रयेषु ॥ १४९ ॥

ग्रामाधिपत्वादिधिया नरेशं
सम्राड्धिया ग्रामपुराधिपान् वा ।
किं सेवमानस्य नरस्य लोके
फलं न दृष्टं विपरीतमेव ॥ १५० ॥

एवं महादेवमनन्तरूपं
सर्वात्मकं सर्वविशेषहीनम् ।
यस्त्वन्यथा पश्यति मोहमात्रा-
त्पूर्णं फलं नो लभते स मूढः ॥ १५१ ॥

अतः प्रयत्नादवधार्य पूर्वं

आचार्यवर्यात्परमात्मतत्त्वम् ।

उपासितुं सम्यगुपक्रमेत

श्रेयोऽधिलिप्सुः परमं विवेकी ॥ १५२ ॥

निरन्तरानन्दघनस्वरूपो

निरस्तमायाकृतसर्वबन्धः ।

असङ्गचिन्मात्रविशुद्धमूर्ति-

रेकश्शिवोऽसावखिलान्तरात्मा ॥ १५३ ॥

महेश्वरो मूर्तिविवर्जितोऽपि

प्रमेहरागादिसुदूरगोऽपि ।

कर्माशयातीतपदस्थितोऽपि

क्षेमाय विश्वस्य तनुं तनोति ॥ १५४ ॥

सरस्वतीश्रीगिरिराजकन्या-

ब्रह्माम्बुजाक्षेश्वरमूर्तिभेदान् ।

एकोऽपि मायारचितान्महेशो

दधाति भक्तानुजिघृक्षयैव ॥ १५५ ॥

स एव लीलां बहुधा करोति
नामानि रूपाणि बहूनि कृत्वा ।
सङ्कल्पमात्रेण विधाय काय-
व्यूहानसंख्यानिव सिद्धयोगी ॥ १५६ ॥

गुडाज्यपिष्टादिभिरेव लोकै-
र्विचित्रभक्ष्याणि यथा क्रियन्ते ।
अंशैर्निजैरेव बहूनि देव-
रूपाणि देवेन तथा क्रियन्ते ॥ १५७ ॥

सुवर्णमेवैकमुपाधिभेदै-
रनेकभूषात्मकतामुपैति ।
तथैक एवाखिललोकनाथ-
श्शरीरभेदैर्बहुदेवभावम् ॥ १५८ ॥

नामादिभेदं लभते यथैकः
पुमानपि ग्रामपुराधिपत्यात् ।
तथा जगत्सृष्टिलयावनाद्यै-
र्ब्रह्मादिसंज्ञां लभते परात्मा ॥ १५९ ॥

राजा यथा पाति महीममात्य-
न्यायाधिपग्रामपुरादिपालैः ।
तथा जगद्रक्षति विष्णुरुद्र-
ब्रह्मादिभेदैः पुरुषोत्तमोऽपि ॥ १६० ॥

विष्णोर्यथैकस्य हि मत्स्यकूर्म-
वराहरामाद्यवतारभेदाः ।
तथा प्रसिद्धाः परमेश्वरस्य
ब्रह्मेशविष्ण्वाद्यवतारभेदाः ॥ १६१ ॥

पीताम्बरं चारु यदा तु धत्ते
विष्णुर्भवत्यत्र तदा महेशः ।
पीताम्बरं मुञ्चति यावदेष
दिगम्बरस्तावदयं महेशः ॥ १६२ ॥

यदा समारोहति पक्षिराजं
विहारहेतोर्भगवान्महेशः ।
तदैव नारायणतामुपैति
वृषाधिरोहे च वृषध्वजत्वम् ॥ १६३ ॥

श्रिया युतश्श्रीपतिरेव साक्षा-
दुमापतिस्स्यादुमया युतश्च ।
वस्त्रोक्षपक्षीन्द्रमुखप्रसिद्धो
नामप्रभेदः परमेश्वरस्य ॥ १६४ ॥

यश्शास्त्रसिद्धं परमेश्वरैक्यं
विहाय मोहात् कुरुतेऽत्र भेदम् ।
अतत्त्वबोधादनवाप्य कामं
स हीयतेऽमुत्र हितादिहापि ॥ १६५ ॥

यश्श्रेष्ठरत्नं दशलक्षमूल्यं
जानाति मोहेन सहस्रमूल्यम् ।
विक्रेतुकामस्स च रत्नमस्य
मूल्यं न पूर्णं लभते कदापि ॥ १६६ ॥

ग्रामादिनाथत्वधिया नरेन्द्रं
न सेवमानः पुरुषो लभेत ।
नरेन्द्रसेवाफलमेवमीश-
मन्यात्मभावेन भजन्नरोऽपि ॥ १६७ ॥

तस्मान्महादेवगुणप्रभावं
तन्मूर्तितत्त्वं च विवेकपूर्वम् ।
महानुभावस्य गुरोर्मुखाज्ज्ञा-
न्निर्धारणीयं पुरुषैः प्रयत्नात् ॥ १६८ ॥

मूर्तिः प्रसिद्धा परमाऽस्ति शंभो-
राद्या तु शुद्धस्फटिकाभवर्णा ।
साम्बा च चन्द्रार्धधरा त्रिनेत्रा
ब्रह्मेशविष्ण्वादिनिदानभूता ॥ १६९ ॥

पुस्ताक्षमालाऽभयबोधमुद्रा-
कुम्भादिहस्ता सुचतुर्भुजा च ।
गजाननस्कन्दगणेशजुष्टा
वृषाधिरूढा विषनीलकण्ठा ॥ १७० ॥

गौरीगणेशाग्निजविग्रहाद्यै-
स्संसारिता कापि न हीश्वरस्य ।
कारागृहान्तर्गमनेन राज्ञा-
मागस्विता काप्यनुमीयते किम् ॥ १७१ ॥

यथा भटा दण्डितलोकवर्गं
कुत्रापि गच्छन्तमनुद्रवन्ति ।
न्यायाधिपग्रामपुराधिपांश्च
किं ! तावतैषां समतोपयाति ॥ १७२ ॥

प्रशासनार्थं खलु दण्डिताना-
मुपासनार्थं च पुराधिपानाम् ।
अनुद्रवन्तो महदन्तरं किं !
न बोधयन्त्यत्र भटा जनेभ्यः । १७३ ॥

शरीरपत्नीसुतखेलनादि-
प्रसंगमात्रेण महेश्वरस्य ।
कः कल्पयेन्मूढतमोऽपि साम्यं
संसारिभिर्जीवगणैस्सहेह ॥ १७४ ॥

जीवो हि जन्मान्तरपुण्यपापैः
पुनः पुनर्योनिषु जायते च ।
अनेकधा दुस्सहदुःखभोगं
भोक्तु सुदीनः खलु कर्मतन्त्रः ॥ १७५ ॥

अज्ञोऽप्यनीशोऽनिशमेष चेष्टा-
निद्रातिहानादिषु देहमानी ।
अल्पाकृतिश्च त्रिगुणेषु राग-
द्वेषादिमानप्युपलभ्यते हि ॥ १७६ ॥

ईशस्त्वयं केवललीलयैव
त्रिनेत्रगौरीपतिविग्रहादि ।
गृह्णाति भक्तप्रियपूरणार्थं
मायामयं वै निजवश्यमायः ॥ १७७ ॥

यदा यदा ग्लायति धर्ममार्गो
ह्यधर्ममार्गोऽपि विवर्धते च ।
तदा तदा स्थापयितुञ्च धर्मं
मूर्तीर्विचित्रास्सृजति स्वशक्त्या ॥ १७८ ॥

कारागृहादौ प्रतिरुद्धलोका-
नवेक्षितुं मोचयितुञ्च कांश्चित् ।
स्वयं यथा ऽऽगच्छति सार्वभौम-
स्तथाऽवतारान् कुरुते परात्मा ॥ १७९ ॥

न तस्य पत्नीसुतभोगवाञ्छा
महेश्वरस्यास्ति सुखामृताब्धेः ।
भक्तानुकम्पावशमागतोऽयं
गृहस्थवच्चाभिनयं करोति ॥ १८० ॥

यथा हि शैलूषवरोऽनुरूप-
रसप्रधानं व्यवहारजातम् ।
करोति तच्चित्तविकारहीनं
तथा महेशोऽपि विचित्रलीलाम् ॥ १८१ ॥

एकोऽपि देही पितृपुत्रपौत्र-
दौहित्रजामातृमुखत्वमेति ।
यथैव सम्बन्धिनरानपेक्ष्य
तथेश्वरो याति बहुस्वरूपम् ॥ १८२ ॥

द्वन्द्वाभिलाषैकमतीन् स्वभावा-
त्कलत्रपुत्रव्यवहारशौण्डान् ।
संसारिजीवाननुयाति वेषै-
र्विश्वास्य संभावयितुं महेशः ॥ १८३ ॥

अयं स्वभावः पशुपक्षिमर्त्य-
देवादिजीवेष्वपि सुप्रसिद्धः ।
सगन्धवर्णाश्रमवेषभाषा-
गुणेषु यत्प्रत्ययमेति सर्वः ॥ १८४ ॥

गावो गवामन्तिकमेव यान्ति
शुकाश्शुकैरेव समं चरन्ति ।
विप्रास्तु विप्रप्रवरान् जुषन्ते
भक्ताश्च भक्तेषु सदा रमन्ते ॥ १८५ ॥

तस्माच्छरीरादिविलोकनेन
नोत्प्रेक्षणीयं सुधिया तु साम्यम् ।
जीवेशयोर्दण्डितचोरलोक-
ग्रामेशयोः कञ्चुकिमत्तयेव ॥ १८६ ॥

मूर्तिष्वनन्तास्वपि काचिदेका
मूर्तिस्तु सर्वैस्समुपासनीया ।
नैश्चल्यमुद्दिश्य धियः प्रवृत्ता-
स्सर्वे हि शंभोर्गुणमूर्तिभेदाः ॥ १८७ ॥

विक्षेपशान्तिर्मनसो न सिध्ये-
दनन्तमूर्तिप्रवणस्य पुंसः ।
विक्षेपयोगे सति दुःखमूले
व्यर्थं समस्तं भजनं किल स्यात् ॥ १८८ ॥

तस्माद्विशेषेण निरोधहेतो-
रेकैव सा मूर्तिरुपासनीया ।
स्वयं मनः प्रीतिमुपैति यस्यां
कुलक्रमात्प्राग्जननान्तराद्वा ॥ १८९ ॥

येनेह या मूर्तिरुपासिता प्रा-
ग्जन्मान्तरे तस्य नरस्य पश्चात् ।
तामेव चेतो वृणुते विशेषा-
त्स्निग्धं महाराजमिवाऽऽश्रितं प्राक् ॥ १९० ॥

उपास्यते चेदिह सैव मूर्तिः
प्रसीदति क्षिप्रमुपासकानाम् ।
यथाऽचिरेणैव महीपतिः प्रा-
गुपासितः पादजुषां नराणाम् ॥ १९१ ॥

उपास्यते चेत्कुलदेवताऽपि
क्षिप्रं प्रसन्नेष्टवरान्ददाति ।
पित्रादिसंसेवितचक्रवर्ती
समाश्रितानामिव मानवानाम् ॥ १९२ ॥

सूपान्नशाकान्नरसान्नभक्ष्य-
चित्रान्नदध्यन्नगुडान्नभागैः ।
एकां क्षुधाशान्तिमनेकरूपै-
र्यथा विधत्ते क्षुधितो जनोऽयम् ॥ १९३ ॥

तथा मुमुक्षुर्गुरुदत्तमन्त्र-
जपार्चनस्तोत्रनमस्क्रियाभिः ।
ध्यानादिभिस्संसृतितापशान्तिं
करोति चित्तप्रियकारिणीभिः ॥ १९४ ॥

कुर्यात्स्वधर्मञ्च बलानुरूपं
भक्तिं दधानोऽपि नरो महेशे ।
चेदन्यथाऽऽज्ञान्तु विलङ्घमानो
नाऽयं शिवस्य प्रियभाजनं स्यात् ॥ १९५ ॥

अशक्तिमोहादिकृतस्वधर्म-
　　त्यागापराधान् सहते तु भक्त्या ।
बुध्या कृतागस्सहते न चेश-
　　स्तस्यापि भक्तिं कपटामवैति ॥ १९६ ॥

यथा नियुक्तं सकलं ह्यकुर्वन्
　　कर्म स्वकीयं नृपमीक्षमाणः ।
मिथ्याधिकारी पुरुषो न राज-
　　प्रसादपात्रं भवतीह लोके ॥ १९७ ॥

किञ्चिद्ज्ञतारागमदप्रमाद-
　　भ्रमादिदोषैकनिधिस्स्वभावात् ।
जीवस्स्वधर्मं सकलं यथावत्
　　कर्तुं न शक्नोति हि पण्डितोऽपि ॥ १९८ ॥

अतोऽपराधा बहवोस्य पुंस-
　　स्त्ववर्जनीयाः खलु संभवन्ति ।
तेषां निवृत्त्यर्थमियं हि भक्तिः
　　प्रशस्यते शङ्करवल्लभेति ॥ १९९ ॥

एवं मया भागवतं स्वरूप-
मुपासनञ्चाभिहितं क्रमेण ।
इतः परं भागवतप्रभेदः
प्रस्तूयते बालविबोधनाय ॥ २०० ॥

उपास्यभेदेन गुणप्रभेदा-
द्भवन्ति भक्तास्त्रिविधाः क्रमेण ।
यजन्ति देवान्किल सात्त्विका ये
ये राजसास्ते तु भजन्ति यक्षान् ॥ २०१ ॥

पिशाचभूतप्रभृतीन् यजन्ते
ये तामसास्ते पुरुषाः प्रमोहात् ।
प्रत्येकमेते त्रिविधा भवन्ति
फलाभिसन्ध्यादिविशेषयोगात् ॥ २०२ ॥

फलान्यनुद्दिश्य विधिप्रकारं
भजन्ति ये सात्त्विकसात्त्विकास्ते ।
फलेच्छया ये तु भजन्ति देवान् ।
दंभादिना सात्त्विकराजसास्ते ॥ २०३ ॥

श्रद्धाविहीनं विधिमन्त्रशून्यं
भजन्ति ये सात्विकतामसास्ते ।
एवं भवेद्राजसतामसाना-
मपि प्रभेदः किल भक्तिभाजाम् ॥ २०४ ॥

वस्वादिदेवानपि ये विहाय
भजन्ति साक्षाद्भगवन्तमेव ।
श्रेष्ठास्तु ते भक्तजनान्तरेभ्यो
भवन्ति सर्वेश्वरसंश्रयेण ॥ २०५ ॥

यथैव सामन्तनृपान्तिकस्थै-
र्मान्या महाराजजना भवन्ति ।
तथैव सर्वेश्वरभक्तवर्या
वस्वादिभक्तैरपि माननीयाः ॥ २०६ ॥

पुनश्च भिन्नास्त्रिविधा भवन्ति
सकामभक्ता भगवत्पदाब्जे ।
जिज्ञासुरार्तः पुनरर्थकाङ्क्षी-
त्येते प्रसिद्धा भगवद्भिरेव ॥ २०७ ॥

आब्रह्मलोकार्थमनित्यमन्त-
रालोक्य नित्यं पदमेव गन्तुम् ।
यो ज्ञानमुद्दिश्य करोति भक्तिं
स एव जिज्ञासुरिति प्रसिद्धः ॥ २०८ ॥

अयं सकामेषु परं प्रशस्तः
प्रगीयते भारतसूक्तिमध्ये ।
ते धर्मपुत्रोद्धवमुख्यभक्ता
एतादृशा युद्धकथावसाने ॥ २०९ ॥

आर्तस्तु शत्रुग्रहरोगपीडा-
निवृत्तिमुद्दिश्य करोति भक्तिम् ।
यथा जरासन्धनिरुद्धभूपा
यथा च कृष्णाऽऽकुलिता सभायाम् ॥ २१० ॥

अर्थाभिलाषीह परत्र वा यो
भोगादिमुद्दिश्य करोति भक्तिं ।
राज्यादिहेतोर्बहुदिव्यलोक-
प्राप्त्यादिहेतोरथवा मनुष्यः ॥ २११ ॥

राज्याय सुग्रीवमुखा यथेह
लङ्काधिपत्याय विभीषणोऽपि ।
ध्रुवोपमन्युप्रमुखाश्च भक्ता
भक्तिं ह्यकुर्वन् प्रियलाभहेतोः ॥ २१२ ॥

निष्कामभक्ता द्विविधास्तु सन्ति ।
ज्ञानान्विता ज्ञानमनाश्रिताश्च ।
प्रेमातिरेकस्य शिवे समत्वा-
त्तेषां विशेषो बहुलस्तु नास्ति ॥ २१३ ॥

तत्रातिमात्रं भगवत्प्रियत्वात्
ज्ञानी तु सर्वोत्तम एव तेषु ।
सर्वात्मभावेन यतस्सदाऽयं
वृणोति साक्षाद्भगवन्तमेव ॥ २१४ ॥

निष्कामभक्तोऽप्यधिकप्रियस्स्यात्
ज्ञानानवाप्तावपि शङ्करस्य ।
अनन्यभावेन वृणोति यस्मा-
दयञ्च साक्षाद्भगवन्तमेव ॥ २१५ ॥

यावत्प्रियं स्याद्धृदये किलैतौ
तावत्समस्तं प्रियमर्पयेते ।
अन्येष्वदत्वा भगवत्पदाब्जे
तद्वत्प्रियस्स्याद्भगवान् तयोश्च ॥ २१६ ॥

जिज्ञासुरप्येवमतिप्रियस्स्या-
ज्जगत्पतेरेव विबोधहेतोः ।
विहाय सर्वान् विषयान् यतोऽयं
निषेवते साधु पदारविन्दम् ॥ २१७ ॥

फलाभिसन्धेरफलाभिसन्धे-
र्जनस्य दृष्टं फलतोऽधिकत्वम् ।
नृपाश्रयादौ हि यतस्तदेषां
तेषूत्तमत्वं श्रुतियुक्तिसिद्धम् ॥ २१८ ॥

अर्थादिहेतोरपि सर्वदेवान्
विहाय साक्षाद्भगवन्तमेव ।
यस्माच्छरण्यं शरणं गतास्ते
तस्मात्प्रिया एव परेऽपि शंभोः ॥ २१९ ॥

तुच्छार्थलोभात्किल वञ्चितास्ते
फलैः प्रशस्तैरिति किञ्चिदूनाः ।
ख्याताश्च भाग्यादपि कामधेनुं
संप्राप्य काचानिव याचमानाः ॥ २२० ॥

ग्रामादिदानाय निबद्धभावे
भिक्षान्नकामा इव भूमिपाले ।
सर्वेश्वरे सर्वपुमर्थदातर्य-
स्पार्थमिच्छन्ति जनास्सकामाः ॥ २२१ ॥

क्रीणन्ति मूल्यैः किल वस्तुजात-
मिच्छानुरूपं वणिजो यथैव ।
तथा सकामा अपि भक्तिमूल्यैः
क्रीणन्त्यभीष्टान् पुरुषोत्तमाच्च ॥ २२२ ॥

यथा सुवैद्यो रुजमौषधं वा
जानाति सम्यङ्न्तथा हि रुग्णः ।
तस्माद्धि वैद्यान्तिकमेत्य तस्य
वरं तदाऽऽज्ञानुविधानमेव ॥ २२३ ॥

सर्वज्ञमेवं किल सर्वशक्तं
संसारवैद्येश्वरमेत्य भाग्यात् ।
किमर्थनीयं पुरुषैर्हिताब्धै-
र्वरं हि निष्काममुपासनं तत् ॥ २२४ ॥

यथा हि भृत्या निजवेतनाय
संसेवमानाः क्षितिपालमौलिम् ।
प्रमादभाजो यदि दण्डनार्हा
भवन्ति नैवं प्रियमात्रकामाः ॥ २२५ ॥

भूतिन्तु भूपादनपेक्ष्य कामं
प्रसादमुद्दिश्य निषेवमाणाः ।
भृत्यास्खलन्तोपि यथास्वकार्ये
न शासनार्हा नृपतेर्भवन्ति ॥ २२६ ॥

एवं स्खलन्तोपि महेश्वरस्य
निष्कामभक्ता नवभक्तिमार्गे ।
आगस्विनो नैव भवन्ति विष्णोः
किन्तु प्रिया एव सदाशिवस्य ॥ २२७ ॥

सकामभक्तास्तु समग्रभक्ति-
मार्गे स्खलन्तो यदि चोदनीयाः ।
फलानुसन्धानवशाद्भवन्ति
दयाम्बुराशेरपि शङ्करस्य ॥ २२८ ॥

प्रीतेरभीष्टेऽपि विधानहेतो
र्न्यूनं प्रियं कामवतामधीशे ।
तस्यानुरूपं प्रियमीश्वरोऽपि
प्रत्यर्पयत्येषु समोऽपि नित्यम् ॥ २२९ ॥

बिम्बानुरूपं प्रतिबिम्बमेव
दृष्टं किलाऽऽदर्शतलेषु लोके ।
भावानुरूपं फलमेव पुंसां
समोपि दत्ते परमेश्वरोऽयम् ॥ २३० ॥

अयं स्वभावः प्रथितः पृथिव्यां
समेपि बिम्बस्य हि सन्निधाने ।
तथैव गृण्हाति मृदां विकार-
श्शुद्धं तु गृण्हाति सुदर्पणं यत् ॥ २३१ ॥

सेवानुसारेण फलं महेशात्

आब्रह्मलोकं समवाप्य भक्ताः ।

कर्मानुरूपां गतिमेव पश्चा-

दतत्त्वबोधाभिहता लभन्ते ॥ २३२ ॥

अन्यात्मभावेन तु ये महेशं

निष्कामभक्तास्सततं भजन्ति ।

ते विष्णुलोकादुपरि प्रसिद्धं

शैवं पुरं चारुतरं लभन्ते ॥ २३३ ॥

ते तत्र सालोक्यमुपेत्य मोक्षं

भुक्त्वा च भोगानथ पुण्यशेषात् ।

स्थलेषु शैवेषु च भक्तवंशे

भूत्वा ततश्शैवपदं विशन्ति ॥ २३४ ॥

उत्पद्य ते ब्राह्मणपुङ्गवानां

कुले महाभक्तिमतां विशुद्धे ।

अभ्यस्तजन्मान्तरभक्तिमेव

श्रयन्ति विज्ञानविरागपूर्वाम् ॥ २३५ ॥

ततस्तु ते सद्गुरुमभ्युपेत्य
प्रसादयन्ति प्रियसेवनेन ।
शृण्वन्ति तस्मात्परमात्मतत्वं
वेदान्तवाक्यैर्विधिवत्क्रमेण ॥ २३६ ॥

विचार्य तर्कैः श्रुतिसम्मतैश्च
श्रुतार्थजातं बहुवारमन्तः ।
निर्धारयन्त्यद्वयमात्मतत्वं
नित्यं चिदानन्दघनस्वरूपम् ॥ २३७ ॥

ततश्च ते तद्बहुकालमन्त-
र्ध्यायन्ति सत्कारसमेतमार्याः ।
निरन्तरध्यानवशेन पश्चा-
त्पश्यन्ति साक्षाद्भगवन्तमेव ॥ २३८ ॥

निरस्तसंसारसमस्तबन्धं
विशुद्धविज्ञानघनस्वरूपम् ।
विहाय चाज्ञानमशेषकार्यै-
र्विनाश्य मुक्ता इह ते भवन्ति ॥ २३९ ॥

एवं महाभागवतास्तु जीव-
न्मुक्तिं समासाद्य परात्मबोधात् ।
प्रारब्धनाशे सति देहभोगै-
र्विदेहमुक्तिं सहसा लभन्ते ॥ २४० ॥

ये त्वात्मभावेन सदा महेशं
भजन्ति निष्कामनयैव भक्ताः ।
सर्वोपरिस्थं शिवसन्निधानो-
ज्ज्वलं पुरं ते प्रवरं विशन्ति ॥ २४१ ॥

तं प्राप्य लोकं शिवभक्तवर्याः
पुनर्न संसारपथे पतन्ति ।
शिवेन सारूप्यमवाप्य तत्र
प्राप्स्यन्ति भोगानसमांश्चिरेण ॥ २४२ ॥

श्रुत्वा ततश्चेश्वरदेशिकेन्द्र-
मुखाम्बुजाद्वेदशिरोवचांसि
अखण्डमात्मानमसङ्गशुद्ध-
मानन्दरूपं हृदि भावयन्ति ॥ २४३ ॥

तेषां विमुक्तिः परमात्मबोधा-
त्ततः प्रसिद्धा स्वयमेव तत्र ।
एवं महाविष्णुमुपासते ये
तेषां च मुक्तिर्भवतीत्थमेव ॥ २४४ ॥

ये स्वात्मभावेन हरिं भजन्ते
निष्काममन्तस्सुकृतातिरेकात् ।
ते विष्णुलोकं बहुदिव्यभोगं
सारूप्यमुक्तिं च सदा लभन्ते ॥ २४५ ॥

विष्णोः पुरं षोडशकोटिमान-
मूर्ध्वन्तु सत्याद्रमणीयभोगम् ।
श्रीभूमिनीलासहितो मुकुन्दो
मोक्षप्रदाता जयतीह नित्यम् ॥ २४६ ॥

वर्षाम्बुदश्यामलकोमलाङ्गः ।
पूर्णेन्दुबिम्बाननकान्तिकान्तः ।
पीताम्बरो यत्र समाश्रिताना-
मानन्दमन्तःकरणे करोति ॥ २४७ ॥

श्रुत्वा महाविष्णुमुखात्ततस्ते
भक्ता महावाक्यमनेकवारम् ।
श्रुत्यन्तनिर्धारितमात्मतत्वं
पश्यन्ति मुक्ताश्च भवन्ति बन्धात् ॥ २४८ ॥

अहंग्रहोपासनमाश्रितानां
भक्तोत्तमानां क्रममुक्तिरित्थम् ।
प्रपञ्चिता किञ्चिदितःपरं तु
प्रस्तूयते मुक्तिगतो विशेषः ॥ २४९ ॥

मुक्तिश्चतुर्धा प्रथिताऽऽगमेषु
स्वधर्मभक्त्यात्मविबोधलभ्या ।
भक्तप्रभेदैः क्रमशोऽधिगम्या
तत्स्थानभोगादिविशेषयुक्ता ॥ २५० ॥

सालोक्यमुक्तिः प्रथमा प्रसिद्धा
स्वदेवतालोकनिवासरूपा ।
सामीप्यमुक्तिस्तु ततो द्वितीया
तद्देवतासन्निधिवासरूपा ॥ २५१ ॥

स्वोपास्यदेवेन समानरूप-
प्राप्तिस्तु सारूप्यविमुक्तिरुक्ता ।
सायुज्यमुक्तिः परमा तुरीया
ब्रह्मात्मनाऽवस्थितिरेव सिद्धा ॥ २५२ ॥

आब्रह्मलोकं निजधर्मदेव-
भक्तिप्रकर्षानुगुणान् महान्तः ।
लोकान् विचित्रान् बहुदिव्यभोगान्
गत्वा लभन्ते चिरमेव तत्र ॥ २५३ ॥

ऊर्ध्वं पृथिव्याः कथितास्तु पञ्च
लोका अधस्तात्किल सत्यतोऽपि ।
दिव्योपभोगाङ्गविमानरामाः
स्वर्गादयो देवनिवासभूताः ॥ २५४ ॥

ऊर्ध्वं पृथिव्या महितोऽष्टकोटि-
विस्तारयुक्तः किल सत्यलोकः ।
यत्रागतानामभयप्रदाता
विराजते वेदमयो विधाता ॥ २५५ ॥

हिरण्मयं वेश्म तु सत्यलोके
वस्तुं समस्तस्य समागतस्य ।
ऐरंमदीयं सरसं सरश्चा-
श्वत्थोऽद्भुतोऽप्यस्ति विचित्रभोगः ॥ २५६ ॥

उपासते ये सगुणं स्वधर्मै-
र्ब्रह्मात्मना तानिह सत्यलोके ।
अमानवः कोऽपि पुमानधस्ता-
द्देवोपनीतान्नयति क्रमेण ॥ २५७ ॥

तत्रागतास्ते बहुदिव्यभोगान्
भुक्त्वा चिरं तीव्रविरागमन्तः ।
अवाप्य वेदान्तविचारमेव
कुर्वन्ति नित्यं मननादिपूर्वम् ॥ २५८ ॥

आत्मानमालोक्य ततः क्रमेण
सत्याद्वयानन्दघनस्वरूपम् ।
ब्रह्मादिभिर्यान्ति विदेहमुक्तिं
सहैव ते तत्प्रलयप्रसङ्गे ॥ २५९ ॥

नारायणं वा परमेश्वरं वा
भजन्ति ये कामनया सुभक्त्या ।
ते विष्णुलोकं शिवलोकमाहो
गच्छन्ति भक्ता बहुभोगभोग्यम् ।. २६० ॥

विष्णोः पुरादूर्ध्वमतुल्यभोग-
संस्थानयुक्तं पुरमीश्वरस्य ।
भूमानतः षोडशकोटिमान-
मास्ते प्रशस्तं शिवभक्तगम्यम् ॥ २६१ ॥

अन्यात्मभावेन तु ये भजन्ति
हरिं हरं वा जगदेकनाथम् ।
सालोक्यमुक्तिं समुपेत्य तत्र
पश्चाच्च ते कर्मफलं लभन्ते ॥ २६२ ॥

शैवात्पुरादूर्ध्वमनुत्तमं तत्
स्थानत्रयं स्कन्दशिवात्मकं हि ।
नित्यं परं शुद्धमनन्तभोग-
मास्ते पुरं श्रीपरमेश्वरस्य ॥ २६३ ॥

यत्रैव नित्यं भगवान् त्रिनेत्र-
श्चतुर्भुजो बालसुधांशुमौळिः ।
जटाकिरीटादिविभूषितस्सन्
विराजते सुस्फटिकप्रकाशः ॥ २६४ ॥

रुद्राक्षमालावरदाभयाङ्क-
शूलादिहस्तः परमशिवोऽयम् ।
उमासहायस्सहवारणास्य-
स्कन्दादिभिर्दीव्यति यत्र नित्यम् ॥ २६५ ॥

अहंग्रहोपासनया सदा ये
पश्यन्ति विष्णुं परमेश्वरं वा ।
तस्मिन् पुरे ते त्रिविधां च मुक्ति-
मवाप्य सायुज्यपदं लभन्ते ॥ २६६ ॥

गतास्तु सायुज्यपदं न भूयः
पतन्ति मातुर्जठरे यथाऽन्ये ।
सदा चिदानन्दघनात्मना ते
तिष्ठन्ति भक्तप्रवराः कृतार्थाः ॥ २६७ ॥

संसारघोरद्रुममूलहेतो-
रज्ञानबीजस्य विदाहितत्वात् ।
परात्मविद्याग्निशिखाविलासै-
स्तेषां न संसारकथाप्रसङ्गः ॥ २६८ ॥

क्षीरं यथा क्षीरसमुद्रमध्ये
क्षिप्तं जलं वा जलधेश्च मध्ये ।
तथात्मवित्स्वं परमात्मभावं
प्राप्नोति सायुज्यपदस्वरूपम् ॥ २६९ ॥

राजात्मजोऽज्ञानवशात्प्रतीतां
व्याधात्मतां स्वस्य यथा विहाय ॥
राजात्मतामाप्तजनोक्तसूक्त्या
प्राप्नोति नित्यं स्वत एव सिद्धाम् ॥ २७० ॥

आत्मा तथाऽज्ञानमृषाप्रतीतां
जीवात्मतां स्वस्य विसृज्य वेगात् ।
ब्रह्मात्मतां ब्रह्मगुरूपदेशैः
प्राप्नोति नित्याद्वयसौख्यरूपाम् ॥ २७१ ॥

एवं मया वैद्यकुलेश्वरस्य
प्रसादमासाद्य कृतं विचित्रम् ।
इदं सतां श्रीनवभक्तियोग-
रसायनं संसृतिरोगशान्त्यै ॥ २७२ ॥

आस्वाद्य चेदं मधुरं महान्त-
स्संसाररोगं शमयन्ति चेन्मे ।
कृतार्थता संभवति प्रसिद्धा
किमन्यदाप्तव्यमिहास्ति लोके ॥ २७३ ॥

अद्वैतभावमवलम्ब्य मया कृतोऽयं
अत्यन्तशुद्धमनसा नवभक्तियोगः ।
अव्याजभक्तिमनसाममितं प्रमोदं
अन्तः करोतु महतामभितोऽक्षिपातैः ॥२७४॥

श्रीकृष्णं श्रुतकाश्यपान्वयशिरोलङ्कारहीरस्सुतं
श्रीरामस्सुषुवे तथा भगवती लक्ष्मीश्च यं ह्यष्टमम् ।
श्रीशृङ्गाद्रिजगद्गुरोरधिगतब्रह्मात्मविद्योऽपि यः
तस्यासीन्नवभक्तियुक्तमयनं पूर्णं रसानामिदम् ॥२७५॥

श्रेयः शाश्वतमैश्वरेण करुणापूरेण भूयात्सतां
सद्धर्मो भुवि वर्धतां नृपवरैर्निर्मत्सरैः पोषितः ।
सस्याढ्या सकलेष्टदा वसुमती भूयात्सुवर्षा सती
सानन्दं भजतां सदैव जगतामीशं च सर्वो जनः ॥२७६॥

॥ इति श्रीकृष्णशास्त्रिकृतिषु नवभक्तिरसायनं सम्पूर्णम् ॥

शुभमस्तु

श्रीः ।

श्रीमत्परमहंसपरिव्राजकाचार्यवर्याणां श्रीकाश्यां ब्रह्मीभूतानाम्
श्रीप्रज्ञानानन्दसरस्वत्यपरनामधेयानां श्रीगीतास्वामि-
पादानां प्रथमवार्षिकाराधनमहोत्सवे संभूतायाः
श्रीकाशीमहाविद्वत्सभायाः ॥

# स्वागतसमर्पणम् ॥

अस्मद्भारतमण्डलावतंसाः पूज्यपादाः पुण्यपुरुषाः !

अहो ! भाग्यं भाग्यं परिणतमिदं पूर्वसुकृतं
प्रभूतं नः पक्वं परमशिवपादार्चनमपि ।
यदेते श्रीमन्तश्चरसकलविश्वेश्वरकलाः
प्रसीदन्त्यस्मासु स्वयमिह समागम्य कृपया ॥ १ ॥

मूर्ता विद्यास्समस्तास्समितिमुपगताः किं नु ! मन्त्रं विधातुं
काश्यां दुष्कालदोषक्षयकरमखिलश्रेयसां मूलभूतम् ।
किं वा ! देवर्षियोगिप्रवरनुतदयासिन्धवो विश्वनाथाः
पातुं भक्तान् भवन्तो वदत ! भवतु तत्स्वागतं स्वागतं वः ॥ २ ॥

पूजां को वा विधातुं क्षमत इह चलन्मूर्तविश्वेश्वराणां
पाद्यस्नानादिकं वा गुणगणकरुणासागराणां विधत्ताम् ।
अज्ञानध्वान्तसूर्याः! कथमिव करवै दीपनीराजनं वः
तस्मादस्मत्कृतानां त्रिकरणनमसां मालिका राजतेऽद्य॥३॥

कटाक्षे कल्याणे पतति यदि येषां सुचरितैः
करस्था मुक्तिस्स्यादितरसुरसिद्धेः किमु ! कथा ।
त एते श्रीमन्तः परमकृपयाऽऽगम्य सकलाः
प्रसीदन्त्यस्मासु द्वयमपि कुलं धन्यमिह नः ॥ ४ ॥

फलं यद्वेदान्ते सकलजपयागादितपसां
प्रसिद्धं यच्चैषां यमनियमयोगादिमहसाम् ।
यदेवेहानन्तश्रुतिपदकणादादिवचसां
तदेतन्नः प्राप्तं भवदमलपादाम्बुजरजः॥ ५॥

पवित्रीकर्तुं यत् परिदधति तीर्थानि सलिलैः
समोदं यद्धत्ते सकलजगदीशोऽपि सरसम् ।
यदेवान्तर्ध्वान्तप्रभवरजसां दाहजनकं
तदेतन्नः प्राप्तं भवदमलपादाम्बुजरजः ॥ ६ ॥

परं पारं गन्तुं भवभयमहाघोरजलधे—
र्भवेन्नौका येषां जगति महती पादयुगली ।
त एते श्रीमन्तः परमकृपयाऽऽगत्य सकलाः
प्रसीदन्ति श्रेयः परममपरं किं ! भवति नः ॥ ७ ॥



यथा चित्तं स्वस्थं सहजपरमानन्दजलधौ
विलीनं भूयान्नः सततमिह देहादिविमुखम् ।
यथा वा न भ्रंशेद्भवदमलपादाम्बुजयना—
त्तथा सर्वे यूयं कुरुत परमानुग्रहमपि॥ ८ ॥

काशी पुण्यपुरी तथा भगवती भागीरथी पावनी
माता श्रीमणिकर्णिका विजयते तत्रापि विश्वेश्वरः ।
साक्षान्मोक्षविधानदीक्षवचसो मूर्ता भवन्तश्च ते
द्राक्षाक्षीरसुधारसैकलहरी नो भाग्यपारम्परी ॥ ९ ॥

नवरत्नमालिकेयं निगमसुरत्नाकरात्तु कृष्णेन ।
पूज्यबुधेन्द्रसभायाः प्रणम्य भक्त्या कृता कण्ठे ॥
इति श्रीकृष्णशास्त्रिकृतिषु स्वागतसमर्पणं समाप्तम्

शुभमस्तु ॥

